BIBLIOTHECA INDICA
*A Collection of Oriental Works*

# SAṂAYAPRADĪPA

*Edited by*
Prof. ASOKE CHATTERJEE ŚĀSTRĪ

Work Number
296




Issue Number
1596

THE ASIATIC SOCIETY
1971

BIBLIOTHECA INDICA — A COLLECTION OF ORIENTAL WORKS

# SAMAYAPRADĪPA
## OF
# ŚRĪDATTA UPĀDHYĀYA

Edited by

Prof. ASOKE CHATTERJEE ŚĀSTRĪ

M.A. (DOUBLE), D.PHIL., D.LIT., Pañcatīrtha, Vācaspati, D. GER.

*Professor and Head of the Department of Itihāsa and Purāṇa, Sanskrit University, Varanasi.*




THE ASIATIC SOCIETY

1971

# PREFACE

From pretty early time Mithila reached the zenith of fame for its unique contribution to the schools of *Navyanyāya* and *Navyasmṛti*. So far the school of *Neodharmaśāstra* is concerned, the names of *Caṇḍeśvara Ṭhakkura, Gaṇeśvara Miśra, Gaṇeśvara Ṭhakkura, Graheśvara Miśra, Harinātha Upādhyāya, Indrapati Ṭhakkura, Lakṣmīpati Upādhyāya, Miśaru Miśra, Padmanābha Datta, Premanidhi Ṭhakkura, Rāmadatta Ṭhakkura, Rudradhara Upādhyāya, Śaṃkara Miśra, Śrīdatta Miśra, Śrīdatta Upādhyāya, Vācaspati Upādhyāya, Vardhamāna Upādhyāya* and *Vidyāpati Upādhyāya* —to mention a few—hardly escape our notice.

There are a few among those of undying fame who had considerably influenced the tenets and ideas, terms and terminologies, matter and scope of discussion of the extant and later Nibandha-writers of Bengal. Of these, *Śrīdatta Upādhyāya* of the thirteenth century A.D. deserves special mention in as much as he is the earliest smṛti-digest-writer of Mithila all of whose works are still available and he has often been referred to by *Raghunandana* of Bengal. The latter in his *Aṣṭāviṃśatitattva* has not only mentioned *Śrīdatta's* name and works quite frequently but in many places admitted the spirit of his arguments and followed him with reverence also. He could not, however, agree with *Śrīdatta* on all points and he even criticized him from time to time—a fact that proves his intimate acquaintance with *Śrīdatta's* works.

*Śrīdatta* is said to have composed the following six digests :— (1) *Ācārādarśa*—printed twice from Varanasi in saṃvat 1924 and 1939, (2) *Śrāddhakalpa*—critically edited by us and published by the Sanskrit University, Varanasi, (3) *Pitṛbhakti*—critically edited by us and published in the Chowkhamba Sanskrit Series, (4) *Chandogāhnika,* (5) *Śuddhinirṇaya* and (6) *Samayapradīpa.*

The present one deals mainly with different *Vratas*. In the first chapter there is a detailed discussion on the definition and characteristics of *Vratas*. Here *Śrīdatta* with consummate skill and intelligence has contradicted his predecessor's theory and established his own definition of *Vrata* which is singularly characteristic. At the end of the first chapter he has enumerated some of the *Vratas*. This enumeration is continued in the second chapter but here these have been classified and enlisted according to the consequence of the lunar month. The third which is the last one is comparatively short and describes mainly the twelve *Saṃkrāntis* and different vows and observances to be performed on these occasions.

There are, however, other exponents of *Dharmaśāstras*, such as *Lakṣmīdhara*, the author of *Kṛtyakalpataru*, *Hemādri*, the author of *Catur-*

*vargacintāmaṇi* and others who also have spared no pains in describing different *Vratas.* But none of them has been able to rise to the occasion and deal elaborately with the technicalities and characteristics of *Vratas.*

This edition has been prepared from a first hand study of all its five available manuscripts :— (1) of the Deccan College, Poona; (2) of the Asiatic Society, Calcutta; (3) of the India Office, London; and (4) and (5) of the Sarasvati Bhavan Library, Varanasi.

In the Sanskrit introduction which has been termed as *Prākkathanam,* the following topics have been dwelt at length :— historical and political situation of Mithila during *Śrīdatta's* advent, fixation of *Śrīdatta's* date, detailed survey of all his six works, his predecessor's and his followers who have been inspired by his writings, an analysis of the subject matter of the present work and an elaborate description of all the five manuscripts used for editing the present text.

In the footnotes an attempt has been made to trace out the sources of all the important verses and passages along with their differences from different *Purāṇas* and *Dharmaśāstras.* Special references have been made to *Raghunandana* and his works only to show *Śrīdatta's* influence on him.

The Appendix A contains the names of ancient works, such as *Purāṇa, Dharmaśāstra* and the like referred to by *Śrīdatta* in this work. The Appendix B contains the Bibliography.

Our thanks are due to the authorities of the Asiatic Society who have been kind enough to include it in the Bibliotheca Indica Series.

We crave the indulgence of scholars for the shortcomings and other printing mistakes which could not be avoided in spite of our best efforts. Any point of suggestion or any new information from scholars regarding the present subject will be welcomed and gratefully appreciated.

Varanasi
2.11.1971

ASOKE CHATTERJEE ŚĀSTRĪ

## CONTENTS

# प्राक्कथनम्

मिथिलाप्रदेशस्येतिवृत्ते यानि प्रसिद्धराजवंशनामानि उपलभ्यन्ते तेषु कर्णाटवंश एव मुख्यः। वंशस्यास्य प्रतिष्ठापको भारतविश्रुतो नान्यदेवो नाम। ऐतिह्यविदां मते एतद्वंशप्रभवा नरपतयः खृष्टीयसप्तनवत्युत्तरदशमशतकात् प्रभृति चतुर्विंशत्यधिकत्रयोदशशतकपर्यन्तं मिथिलाया भाग्यनियन्तार आसन्। यदैव चिराय विदेहवंशस्य गौरवरविरस्तं गतः, ततः प्रभृति चतुःशतीमब्दानां पराधीनता वश्यता वा मिथिलाया इतिहासप्रसिद्धा। कर्णाटवंशस्य प्रतिष्ठापकस्तु तां गृहविवादात् परपीडनाच्च उददीधरत् पुनः स्वमहिम्ना च प्रतिष्ठापयामास। एतद्वंशोद्भवा नान्यदेवमल्लदेवप्रभृतयः प्रथितयशसः नरपतिचया न केवलं राजनीतिकीं समुन्नतये एव प्रायतन्त, परन्तु सांस्कृतिकमभ्युत्थानं प्रत्यपि ते अप्रमत्तचेतस आसन्। तेन च शिल्पानां कलाकलापानां साहित्यादीनां च संविधाने नवनवोन्मेषशालिनी प्रतिभा प्राकाशत। साहित्यक्षेत्रे बहवः सुपण्डिताः प्रादुरभूवन्। संस्कृतसाहित्यस्यापि गवेषणामूला बहव उत्कृष्टा ग्रन्था व्याख्यानानि च उपन्यबध्यन्त। तेषु लक्ष्मीधरभट्टरचितो राजनीतिकल्पतरुः (१), चण्डेश्वरस्य राजनीतिरत्नाकरः, पद्मनाभदत्तस्य सुपद्मव्याकरणम्, रत्नेश्वरस्य सरस्वतीकण्ठाभरणनाम्नः अलंकारग्रन्थस्य विवृतिः, ज्योतिरीश्वरस्य पञ्चसायकम्, रङ्गशेखरवर्णरत्नाकरौ, पृथ्वीधरस्य मृच्छकटिकप्रकरणटीका, भवदत्तस्य नैषधीयचरितव्याख्याग्रन्थः, शीकराचार्यस्य व्याख्यामृताख्यामरकोषाभिधानस्य टीका च विशेषेण उल्लेखनीयतामर्हन्ति।

मिथिलायां न्यायशास्त्रालोचनं सर्वजनविदितमेव। वङ्गीया नव्यन्यायचुञ्चवो यन् मिथिलावासिभ्यो गुरुभ्यो न्यायशास्त्रविज्ञानं धारयन्ति इत्यत्र नास्ति सन्देहलेशोऽपि। न्यायशास्त्रेष्विव स्मृतिशास्त्रेष्वपि वङ्गीयाः स्मार्त्ता मैथिलस्मार्त्तानामधमर्णा इति निर्विवादमेव।

वङ्गीयो जरत्स्मार्तो रघुनन्दनो बहुशो मैथिलस्मार्तग्रन्थप्रणेतॄणां प्रभावेण संस्कृतमतिरासीदित्यपि गवेषकनिचयानां निःसन्देहम्।

कर्णाटवंशोद्भवानां नृपतीनां जीवितव्यसमये तदुत्तरेष्वपि युगेषु ऐनवारवंशीयानां (खृष्टचतुर्विंशत्युत्तरत्रयोदशे षड्विंशत्यधिकत्रयोदशे वा शतके आनुमानिके) राजत्वकाले

(१) जर्नल अफ विहार एण्ड उडिष्या रिसार्च सोसाइटि, भल्युम ११, पृ० ६८

मिथिलायां स्मृतिशास्त्रस्याध्यापनाध्ययनसन्ततेः फलं स्मार्तनिबन्धग्रन्थरचनायाः सर्वतः प्रचारवार्त्ता उदजृम्भत। तत्र प्रख्यातेषु निबन्धृषु श्रीदत्तोपाध्यायः, चण्डेश्वरः, हरिनाथोपाध्यायः, भवशर्मा, पद्मनाभदत्तः, इन्द्रपतिस्तदन्तेवासी तद्दीक्षितश्च लक्ष्मीपतिरुल्लेख्यनामानो भवन्ति (२)। एते सर्व एव वङ्गेषु प्रचलितधर्मशास्त्राणि प्रभावयामासुरिति विप्रतिपत्तिशून्यम्। प्रसङ्गादेतदपि चिन्तनीयं द्वादशे त्रयोदशे च खृष्टशतके यत् साधारण्येन प्रजानां स्मृतिशास्त्रमनु आग्रहातिशयो न निर्मूलकः भारतस्योत्तराखण्डे मध्ययुगस्येतिवृत्तपर्यालोचनया उपलभ्यते तत् प्रामाण्यमभ्युपेयते। भारतबाह्यानां शत्रूणामाक्रमणेन वा धर्मान्तरस्य प्रभावाद् वा यदैव सनातनधर्मक्षेत्रे सामाजिकी नैतिकचिन्ता अवलुप्तप्राया प्रावर्त्तत, तदैव ब्राह्मण्यधर्मप्रवणा वा वैदिकधर्मोपजीविनो मनीषिणो वा नवनवान् वेदमूलकान् धर्मग्रन्थान् प्रणीय स्वराष्ट्रमिदं विधर्मीकरणकवलाद् उद्धर्त्तुमयतिषत। परधर्मो भयावह इति कृत्वा वाक्पल्लवेन स्वधर्मस्य जयमुद्घोषयन्तस्ते स्वाधिष्ठानं राष्ट्रं धर्मान्तरविप्लवात् मोचयितुं प्रयासमङ्गीकृतवन्तः। मन्ये परवर्तिकाले पुराणस्मृतिशास्त्रादिप्रणयनस्य तत्प्रचारस्य वा इदमो निदानमिति। सर्वेषामेषां पुराणस्मृतिग्रन्थानां रचनाया मूलकारणे परोक्षत्वेन विद्येते देशस्य सामाजिकी राजनीतिकी च अवस्थे। प्रकृते च मिथिलायाः राजनीतिकप्रयुक्तिं विचारयन्तो वयं पूर्वोक्तस्वरसं समर्थयितुं प्रयसिष्यामहे।

आसीद् द्वादशत्रयोदशशतकयोरखण्डवङ्गप्रदेशो राढवाग्दीवङ्गवरेन्द्रमिथिलाभिः पञ्चधा विभक्तः। तदानीन्तनानां यवनैतिहासिकानां मते इदमुट्टङ्क्यते यत् महम्मद वक्तियार नामा कश्चिद् यवनसेनानीः प्राथम्येन मिथिलां त्र्यधिके त्रयोदशशतके (१२०३) आचक्राम (३)। स किल न केवलं मिथिलामेवाधिकृत्य विरराम परन्तु तस्या दक्षिणपूर्वप्रदेशमपि स्वसाम्राज्ये अन्तर्भावितवान् (४)। ततश्च स गौडभूमिं विजिग्ये। वक्तियारयवनसेनान्या मिथिलाधिकारकाले तत्र कर्णाटवंशावतंसो नरपतिर्नरसिंहदेवो राष्ट्रं शास्ति स्म। तदानीं च सुलतान कुतुवुद्दीन आइवेकः किल दिल्लीसिंहासनमधिष्ठित आसीत्। केषांचित् ऐतिह्यविदां मते नृपतिर्नरसिंहदेवो वक्तियारखिलजीनाम्नो यवनसेनापतेर्वश्यतामङ्गीकृत्य तस्मै करं दातुमगत्योररीचकार (५)।

---

(२) जर्नल अफ दि एसियाटिक सोसाइटि अफ बेंगल, १९१५, पृ० ४१४

(३) केम्ब्रिज हिष्ट्रि अफ इण्डिया, भल्युम ३, पृ० २६०

(४) ब्रिग्स्, फेरिस्ता, ( हिष्ट्रि अफ दि राइज अफ दि महेमेडान पाओयार ), भल्युम १, पृ २३१

(५) इलियास रहमानि, मिथिला, भल्युम २२, १९५३, पृ० ६

तस्य यवनसेनापतेः पुत्र इक्तियार उद्दीनो महम्मदो नामासीत्। तेनापि मिथिलाभूमिर्निर्यातिता निपीडिता चाभवत्। स किल मिथिलां मगधांश्च विजित्य प्राज्यानि धनरत्नानि लुण्ठितवान्। तल्लभ्यांशलिप्सया तत्स्वजातीया बहवोऽनुचरास्तत्-पक्षपातिनो भवितुमाग्रहं प्रकाशितवन्तः (६)। चतुर्दशशतकस्य प्रथमभागे मिथिला-धीश्वरेण हरिसिंहदेवेन सह दिल्लीश्वरस्य सम्राजो गियासुद्दीन तुघलकस्य शक्तिपरिचय आसीत् इत्यत्र नास्ति सन्देहलेशोऽपि। चण्डेश्वरकृतदानरत्नाकरग्रन्थस्य संवादेन उपलभ्यते यन्नरपतिर्हरिसिंहदेवो यवनाध्युषितां पृथिवीं पुनरुदधीधरत्(७)। कविशेखरस्य आचार्यज्योतिरीश्वरस्य कृतौ धूर्तसमागमनाम्नि द्व्यङ्के कस्मिंश्चित् प्रहसने कर्णाट-चूडामणिं हरिसिंहमभि एतदुक्तं वर्तते यदयं किल सुरत्राणं यवनेश्वरं पराबभूवेति (८)। मन्ये अयमेव सुरत्राणः सम्राट् गियासुद्दीन तुघलकापरपर्यायभागिति। यवन ऐतिहासिको गियासुद्दीनवारणी नामधेय उद्घोषयति "यदा सुलतान गियासुद्दीन तुघलकस्तीरहुतमुपागतस्तदा लक्षणावत्यधिपः सुलतान नासिरुद्दीनः तं तुघलकं विष्टरमाल्यप्रदानेन सम्पूजनार्थं प्रत्युज्जगाम। तथा च तद्देशस्य सर्वे एव सामन्तनृपाः ( रयिसाः राणाश्च ) युद्धं विनैव गियासुद्दीनतुघलकस्य वश्यतां स्वीचक्रुः।"

("When the Sultan reached Tirhut, the ruler of Lakhnavati, Sultan Nasiruddin came for the great respect to pay homage to the Sultan and without the sword being called into requisition all the Rais and Ranas of the country made their submission".)

हरिसिंहदेवेन सह दिल्लीश्वरस्य गियासुद्दीन तुघलकस्य संग्रामफलं यद् भवतु नाम, फलतस्तु तदानीन्तनानां मैथिलानां समाजे कश्चित् प्रबलो विप्लवः संघटितोऽभवत् (९) आभीक्ष्ण्येन यवनसम्राजाक्रान्ताया मिथिलाभूमेरधिवासिनां जीवनयात्रा धर्मनिष्ठा च खिलीभूतेति प्रचरति पूर्वतनी वार्ता।

---

(६) केम्ब्रिज हिष्ट्रि अफ इण्डिया, भल्युम ३, पृ० ४१
हिष्ट्रि अफ बेंगल, भल्युम २, पृ० २०, पादटीका १

(७) दानरत्नाकर, अन्तिमश्लोकः "मग्ना म्लेच्छमहार्णवे येनोद्धृता लीलया"
आर एल मित्र, नोटिसेस अफ स्यान्सक्रिट म्यानुसक्रिप्ट, ६, १३५, नं० २०६९

(८) धूर्तसमागमनाटकम् नेपालदरवार नोटिसेस, पृ०६६
"नानायोधनिबन्धनिर्जितसुरत्राणात्रसद्वाहिनी
नृत्यद्भीमकबन्धमेलकदलद्भूमिभ्रमद्भूधरः।
अस्ति श्रीहरिसिंहदेवनृपतिः कर्णाटचूडामणि-
द्दृप्यत् पार्थिवसार्थमौलिमुकुटन्यस्ताङ्घ्रिपङ्केरुहः॥"

(९) इलियट्, तारीख-इ-फिरोजशाही, भल्युम ३, पृ० २३४

आसीच्चतुर्दशशतकस्य मध्यभागे महम्मदो विन तुघलको दिल्लीसिंहासनमधिष्ठितः (१०)। तस्य कामचारं प्रमत्ततां च सुभगावसरत्वेनोपजीव्य बहवः सनातनधर्मावलम्बिनो राजानो दिल्लीश्वरस्य शासनमवमन्तुमुपचक्रमिरे। मिथिलाभूमिरपि तदानीं यवनसम्राजः सार्वभौमत्वमवगणय्य सर्वथा स्वं स्वातन्त्र्यं प्रतिष्ठापयितुमुपक्रान्तवती। दुरदृष्टवशात् द्विचत्वारिंशदधिके त्रयोदशशतके सामसुद्दीन हाजी इलियासो वङ्गराज्ये निजं शासनं प्रत्यतिष्ठिपत्। इत्थं स दिल्लीसाम्राज्यभुजामधिकृतपुरुषाणां क्षीयमाणं बलं सनातनधर्मावलम्बिनां च राज्ञां मिथो विवादं समीक्ष्य लब्धावसरो वङ्गदेशात् पश्चिमाभिमुखमभिषेणयितुं सन्नाहमकरोत्। तदीयसाम्राज्यलिप्सायाः प्रथमा सिद्धिर्मिथिलाविजयः। स्वेच्छया मिथिलाभुवं द्विधा विभज्य तयोर्मध्यसीमारेखारूपेण बुढीगण्डकं निरूपितवान्। साम्प्रतिकैनवारवंशोद्भवो मिथिलाधिपः कामेश्वरठक्कुरस्तत् नानुमेने किन्तु सामसुद्दीन हाजी इलियासस्य शक्त्यतिरेकं स्मरन् अगत्या मिथिलाविभागमनुमेने।

अत्रान्तरे सम्राजस्तुघलकस्यासन्तोषहेतुत्वमुपागात् सामसुद्दीननाम्नो हाजी इलियाससाहस्य क्रमोपचीयमाना प्रतिष्ठा दिल्लीसाम्राज्यवादस्य चास्वीकार एतद्द्वयी। सोऽनतिचिरात् इलियाससाहं समुचितं दण्डयितुं तं प्रति कांचित् विपुलां रणवाहिनीं प्राहिणोत्। त्रिपञ्चाशदधिकत्रयोदशशतके असौ चमूर्मिथिलामधिकृत्य स्वपदसेविनीं च विदधती दिल्लीश्वरस्य वश्यतां सुतरां निन्ये। एवं सम्राजः समभ्युदयाद् भीत इलियासो मिथिलायाः पाण्डुयायां तस्याः पुनः एकदलायां प्रपलायांचक्रे। तथापि सम्राट् तुघलकः तमभिद्रवन् सङ्कटमेव निनाय।

एवं दिल्लीश्वरो मिथिलाभूमौ स्वीयं प्रभुत्वमधिरोपयामास। मिथिलायां स्वीयमधिकारं सुस्थिरं कर्त्तुकामः स गियासुद्दीनतनयो महम्मदतुघलकः 'तुघलकपुर उरुफ तीरहुत" नाम्ना मुद्रां प्रवर्तयामास। अमूषां च मुद्राणां द्वयोरेव प्रत्यभिसन्धानमिदानीं लभ्यते। यदा तावत् तुघलकः कामचारेण रौप्यमुद्रामवधूयारकूटमुद्रां प्रावर्त्तयत् ततः प्रभृति ते आरकूटमुद्रे अस्मिन् विषये प्रतिभुवौ स्थिते (११)।

(१०) केम्ब्रिज हिष्ट्रि अफ इण्डिया, भल्युम ३, पृ० १३५

(११) रजार, इण्डियान म्युजियाम कयेन्स, भल्युम १, पृ० २३,
१२६११ संख्यका मुद्रा द्रष्टव्या
रोरडिलह्न, क्याटालग अफ इण्डियान म्युजियाम कयेन्स, भल्युम २, पृ० ६०,
३८४ संख्यकमुद्रा
जर्नल अफ दि एसियाटिक सोसाइटि अफ बेंगल, १८८३, पृ० ६२
रजार, इण्डियान म्युजियाम कयेन्स, भल्युम, १, पृ० ६३,
१२६१२ संख्यकमुद्रा द्रष्टव्या

निरुक्तपरिस्थितेस्त्रयोदशचतुर्दशशतकयोः मिथिलायां राजनीतिकगतेः संक्षिप्त-परिचय उपलभ्यते । तदानीम् आभीक्ष्ण्येन विभिन्नधर्मावलम्बिभिराक्रान्ता मिथिला सुतरां यवनवश्यतामन्वमोदत । एकतो दिल्लीश्वरशासनादन्यतश्च वङ्गशासनकर्तुः प्रभावा-दात्मनो मुक्तिं न लेभे । तेन च मैथिलानां न केवलं राजनीतिकं स्वातन्त्र्यं लुप्तमपि तु धर्माचरणं सामाजिकजीवनगतिश्च शैथिल्यमभजन् । यद्यपि यावनधर्मं दूरतः स्थापयितुं सनातनधर्मः सदैव सन्नद्धः प्रयत्नवांश्च तथापि तस्य दुर्दमगतिं रोद्धुं नालम् । ततश्च भारतवर्षस्य प्रादेशिकभूखण्डान्तरेष्वपि यो दशाविपर्ययः पर्यदृश्यत मिथिलायामपि सोऽव्यभिचरित एवासीत् । क्रमेणास्य नवीनाभ्युदयस्य यावनधर्मस्य सनातनधर्मस्य च द्वयोः समन्वयः स्थापितात्माभवत् । मिथिलावासिन आपामराः सर्वे जनाः क्षुण्णाया-मात्मभाषायां पारसिकीम् आरवीयां च भाषां प्रयोक्तुं प्राक्रमन्त । यावनधर्मं तदाचरणानि च श्रद्धया ग्रहीतुमारभन्त । उपरितनसमये सम्राजा आकबराख्ययवना-धीश्वरेण प्रवर्त्तितं फसलीसंज्ञं वत्सरमानं मिथिलायां वत्सरमानत्वेन पर्यणमत् । तेन हि प्रथितनामा राजतरङ्गिणीग्रन्थभाष्यप्रणेता लोचनकविर्यावनमिमानरागं फिर-दासीरागिणीं च समाशिश्रायेति मन्यामहे (१२) । अन्यतश्च मिथिलाभूमिः यवन-राजभुज्यमानापि अष्टादशशतकं यावत् सनातनीं प्राचीनपद्धतिमनुसरन्ती राजकार्यं नीत्यादिकर्माधिकरणिकव्यवहारं च निरवाहयत् (१३) । यवना अपि सनातन-धर्मावलम्बिनां देवयात्रादिकं श्रद्धावन्त एवोररीकृतवन्तः । यवनाः सज्जना यतयोऽपि सनातनीयान् रामकृष्णादिदेवावतारानभजन्त । एतदुपरिष्टात् प्रवृत्तिरियं यद् यवनानां मिथिलायाम् आगतिसमकालमेव सनातनधर्मावलम्बिनो मिथिलावासिनो तेषां सामाजिकनयं, संस्कारं, धर्मानुष्ठानं, शिक्षां, दीक्षां, ध्यानधारणादिकानि च नान्वसरन्, न माल्याद्यर्घ्यदानसहकारेण वृतवन्तः, प्रत्युत यथाशक्ति तत्प्रतिरोद्धुं प्रायतन्त । तथा हि जनसमाजे यदैव नवीनधर्माक्रमणजनितो विप्लवः समुदेति स्म तदैव ब्राह्मण्यधर्मस्य दृढमूलं चचालेति । अस्मिन्नेवान्तरे वेदैकशरणा ब्राह्मणा अपि एतन्नवीनधर्मेण प्लाव्यमानं स्वदेशं जनसमाजं च रक्षितुं क्रमं बबन्धुः । किन्तु राजनीतिकगतौ सामाजिकवर्त्मनि च संयमं शृङ्खलां वा उज्जीवयितुं नाशक्नुवन् । यथा च पारिवारिकी सामाजिकी च जीवनयात्रा अबाधितगत्या प्रवहन्ती स्यात् तथा ते अवधानेन प्रायस्यन् । तत्कालीना जना अभिनवधर्मप्रभावेन विभिन्नमतयः

---

(१२) उपेन्द्र ठाकुर, हिष्ट्रि अफ मिथिला, पृ० ३७४-३७५

(१३) के० पि० जयसोयाल, अन दि जाज्मेन्टस अफ सचलमिश्र, जर्नल अफ विहार एण्ड उडिष्या रिसार्च सोसाइटि, १९२०

यथा पुनः स्वास्थ्यं सुस्थिरतां वा लभेरन्, यथा पुनरपि ब्राह्मण्यधर्मं प्रति अनुरागिणो भवेयुस्तदर्थं पण्डितवर्गा बहून् स्मृतिनिबन्धान् न्यबध्नन्। एतदेव तेषामभिप्रेतमासीत् यथा प्राचीना धर्मसंहिता एतन्निबन्धग्रन्थानां सहकारितया सुबोधा ऋजवः स्युरिति। तत्पारिणामिकतया तदानीन्तनानां जननिवहानां दृष्टिरस्मिन् विषये निपतिता सामाजिकजीवनगतिश्च कथंचित् उज्जीविता च अभवत्। एषु स्मृतिनिबन्धेषु निबद्धा विषया एषु अन्तर्भूता आसन् (१४)। तथा चोच्यते- "समतिक्रान्तकालेन मालिन्यमापन्नेऽपि अस्मिन् शास्त्रे अन्तर्निहितमौज्ज्वल्यमसाधारणं नैपुण्यं च समधिकमासीत्" एवं च—"नात्र किमपि आश्चर्यं यद् हिन्दुज्ञानपीठाना-मन्यतमेयं मिथिला भूमिः एतेषां शास्त्राणां रक्षयित्री पालिका चासीत्" ("Intrinsic merit and innate strength inspite of age-old aberrations".

"Mithila being one of the chief architects of Hindu Learning, it is not surprising to find an individual tradition of the texts".)

अतश्च स्मृतिनिबन्धकाराणामेव निरवच्छिन्नसमुद्यमः प्राज्योऽध्यवसायश्च मिथिलायाः सामाजिकजीवनं कथमपि कियच्चिरमपि प्राचीनभावं सर्वथा नावगणया-मासेति वक्तुं शक्यते। एषु स्मृतिनिबन्धकारेषु ग्रहेश्वरमिश्रः, गणेश्वरमिश्रः, श्रीदत्तोपाध्यायः, गणेश्वरठक्कुरः, चण्डेश्वरठक्कुरः, रामदत्तठक्कुरः, हरिनाथोपाध्यायः, पद्मनाभदत्तः, श्रीदत्तमिश्रः, विद्यापत्युपाध्यायः, इन्द्रपतिठक्कुरः, प्रेमनिधिठक्कुरः, लक्ष्मीपत्युपाध्यायः, मिसरुमिश्रः, रुद्रधरोपाध्यायः, गणपतिश्चेत्येवमादयः पण्डिता विशेषत प्रथितनामानः। एषु केषांचिन्नामानि अद्यापि पुस्तिकासु पत्रेषु च निगूढानि। तैर्निबद्धग्रन्थानां नामान्येव उपलभ्यन्ते, न तावत् ते ग्रन्था अद्यापि परिचीयन्ते। केनचिन्निबन्धकारेण निबन्धेषु अनेकेषु ग्रन्थेषु एकद्वावेव प्राप्यन्ते, कस्यचित् पुनः सुदैवप्रसादाद् रचितानां सर्वेषामेव ग्रन्थानामधिगमो भवति। तेषु च एकोऽनेकेऽपि वा प्रकाशिताः सन्त्येव। तत्र श्रीदत्तोपाध्यायः अन्तिमपक्षपतित इति मन्यामहे। तथा हि तन्निबद्धाः सर्व एव ग्रन्था अस्माभिरुपलब्धाः सन्ति। पुस्तिकाकारेण सत्सु बहुषु ग्रन्थेषु एक एव प्रकाशित आस्ते। श्रीदत्तोपाध्यायेन प्रणीतानां नानाविधानां ग्रन्थानां परिचयदानात् प्राक् तस्याविर्भावकालो यत्किंचित् विचारयितव्यः।

---

(१४) जर्नल अफ बिहार एण्ड उडिष्या रिसार्च सोसाइटि, १३ ( सार्च फर स्यान्सक्रिट एण्ड प्राकृत म्यानुसक्रिप्टस इन बिहार एण्ड उडिष्या ३-४)

दुरदृष्टमेतदस्माकं यत् प्राचीना ग्रन्थकाराः स्वजीवितकालस्य ग्रन्थरचना कालस्य च किमपि तथ्यं न व्यवृण्वन् । श्रीदत्तोपाध्यायोऽपि तथा । प्रत्यक्षप्रमाणाभावात् तत्स्थितिकालज्ञानाय अस्माभिरन्यत् प्रमाणमनुसर्त्तव्यम् । संक्षेपतः इदं वक्तुं शक्यं यत् श्रीदत्तोपाध्यायग्रन्था एकशो बहुशो वा चण्डेश्वरस्य कृत्यरत्नाकरे, वाचस्पतिमिश्रस्य पितृभक्तितरङ्गिण्यां, रुद्रधरस्य वर्षकृत्यग्रन्थे, शूलपाणिमहामहोपाध्यायस्य दुर्गोत्सवविवेके, तथा स्मार्त्तप्रवरस्य रघुनन्दनभट्टाचार्यस्य अष्टाविंशतितत्त्वेषु तत्र तत्र उद्धृताः सन्ति, किं बहुना चण्डेश्वरस्तस्य कृत्यरत्नाकरग्रन्थे उक्तवान्—

"यत् श्रीदत्तोपाध्यायैस्तु सन्ध्यादिकर्मसु कुशाः पवित्रमिति अनेन कुशपत्रत्रयस्यापि पवित्रत्वेन प्रतिपादनात् अनन्तर्गर्भिणं साग्रमित्यादिवचनेन सर्वत्र वैदिककर्मसु कौशद्विदलस्याप्युक्तत्वात् सन्ध्यादिकर्मसु कुशत्रयं कौशं द्विदलं पवित्रं च व्यवस्थापितम्. लिखितं च सन्ध्याप्रयोगे, एतच्च कल्पतरुपारिजातविरोधात् अत इत्यसङ्गतेश्च नादेयमिति" (१५) ।

वाचस्पतिप्रणीतपितृभक्तितरङ्गिण्यामपि दृश्यते —

"पशूननक्तीतिवत्, श्रीदत्तोपाध्यायोऽप्येवम्" (१६) ।

तत्रैवान्यत्रांशे लिखितम्—

"याम्यां काकोत्पत्तौ वेदद्वयसाधारण्यां समयप्रदीपादौ प्रामाणिकनिबन्धे
पौर्णमास्यां वा योगे वायसाः पञ्च जज्ञिरे ।
इन्द्राच्च वरुणाद् वायोर्यमादथ च निर्ऋतेः" (१७) ।

अन्यत्रापि—

"यत्र तु सर्वस्मिन्नेव दिने निषिद्धं नक्षत्रं तत्र ब्रह्मपुराणीयकल्प एवादरणीय इति प्रदीपः" (१८) ।

---

(१५) कृत्यरत्नाकर, पृ० ६६

(१६) पितृभक्तितरङ्गिणीग्रन्थस्य१०६ संख्यकपृष्ठेआद्यादिषोडशश्राद्धानां साधारण्येन सङ्कल्पवाक्यस्य तदन्तर्गतस्याद्यश्राद्धादे विशेषसङ्कल्पवाक्यस्य च क्रमविधायकः कोऽपि निर्द्धारितनियमो नास्ति, यदृच्छयैव क्रमो ग्राह्यः। उदाहरणत्वेनैतद् वक्तुं शक्यते यथा पशून् अनक्ति इत्यत्र पशुवधान्ते शोणितनिरासस्य शकृन्निरासस्य च कोऽपि क्रमो न निर्द्धारितः ।

(१७) पितृभक्तितरङ्गिणी, १६४ख १६५क दशपूरकपिण्डदानान्तःकाकवलौ वेदभेदेन दिग्विशेषनियमो न स्वीकृतः, परन्तु दक्षिणैव दिक् सर्ववेदिनां करणीयत्वेन प्रतिभाति । अन्ये तु तत्र यजुषामुत्तरा सामगानां दक्षिणा अवलम्बनीयेति वदन्ति ।

(१८) पितृभक्तितरङ्गिणी, पृ० १६० सपिण्डनापकर्षे चतुर्णां कल्पानां विधिर्वर्तते, परन्तु तेषु यदि सर्वेषु भरणीकृत्तिकादीनां निषिद्धनक्षत्राणां योगः स्यात् ।

पुनरेकत्राप्यंशे वाचस्पतिनोक्तम्-

"यच्छ्राद्धे अन्नादित्यागः स्वधापदोल्लेखेनैव कर्तव्य एतदेव श्रीदत्तोपाध्यायाभिमतम्। परन्तु कल्पतरुरत्नाकरमते तत्र स्वधा नमः इति युग्मं त्यागबोधकपदमुल्लेखनीयमिति" (१६)।

वाचस्पतिमिश्रस्य श्राद्धचिन्तामणावपि दृश्यते

"अत्र च प्रकाशहलायुधकल्पतरुपारिजातपितृभक्तितरङ्गिणीप्रदीपविवेकेषु इयं व्यवस्था यत् औरसक्षेत्रजाभ्यां मृताहे पितुः पार्वणं कर्तव्यमिति" (२०)।

शूलपाणेर्दुर्गोत्सवविवेकेऽपि श्रीदत्तोपाध्यायस्योक्तिः लिखितास्ति।

"समांसरुधिरदानमाह श्रीदत्तोपाध्यायधृतं समयप्रदीपे भविष्यपुराणम्-

गोसुवर्णानि राजेन्द्र वस्त्राणि विविधानि च।
समांसरुधिरैर्देवी सन्तुष्यति चरेद् भृशम्॥

महिषस्य समांसरुधिरदानं निषिद्धम् (२१)। तदाह भविष्योत्तरे—

न दद्यान् माहिषं मांसं सरक्तं साधकः क्वचित्।
दददिष्टफलं तस्य रुष्टा हन्ति च कालिका॥

केवलरुधिरदानमिति श्रीकरमिश्राः (श्रीदत्तमिश्राः इति पाठान्तरम्)"।

दृश्यते च एतस्यैव ग्रन्थस्य अपरत्र

"यत्तु अष्टम्यां वलिदानेन पुत्रनाशो भवेद् ध्रुवम् इति देवीपुराणीयमेतत्तु अष्टमीक्षणे सन्धिपूजावलिदाननिषेधकमिति श्रीदत्तश्रीकरमिश्राः" (२२)।

तत्परवर्त्तिनि काले एव रुद्रधरस्य वर्षकृत्यग्रन्थे श्रीदत्तकृतसमयप्रदीपग्रन्थस्य बहुश उद्धृतयः स्वीकृतयश्च लभ्यन्ते यथा—

"एतद्व्रतत्रयं यावज्जीवमिति, स्नानेन द्रविणाधिकमिति व्रतं यावच्छक्यमिति च समयप्रदीपः" (२३)।

---

तर्हि प्रदीपकारमते तत्रापकर्षो निषिद्धः। तत्र संवत्सरान्ते मृततिथौ सपिण्डनं विधेयम्। ब्रह्मपुराणीयकल्पस्य इदमेव विधानम्।

(१६) पितृभक्तितरङ्गिणी, पृ० १६६—ततो विष्णुं स्मृत्वा श्राद्धीयद्रव्यं ब्राह्मणाय प्रतिपादयेत् इति श्रीदत्ताह्निकानुसारी पन्थाः, कल्पतरुरत्नाकरमते तु स्वधा नम इति त्यागः।

(२०) श्राद्धचिन्तामणि, पृ० १३६

(२१) दुर्गोत्सवविवेक, पृ० २१

(२२) दुर्गोत्सवविवेक, पृ० १८

(२३) रुद्रधर, वर्षकृत्य, पृ० १७१

"ओं भगवन् सूर्य भगवत्यो देवताः अद्येत्यादि प्रतिमासम् एकोपवासव्रत-महमाचरिष्ये इति निवेद्य ओं विद्वत्त्वधार्मिकत्वकामः अद्येत्यादि प्रतिमासमेकोपवासव्रतमहं करिष्ये । एतद्व्रतं यावज्जीवमिति समयप्रदीपः" (२४) ।

"एकादशीं परित्यज्य द्वादशीमुपवासयेदिति वाक्यादित्याहुस्तन्न, एतद्वाक्यस्य प्रामाणिकत्वात्, वराहपुराणीयवाक्यानां च द्वादशीव्रतविषयकत्वादिति समय-प्रदीपः" (२५) ।

"इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः ।
अग्निषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

इति सामान्यतो मासलक्षणात् तेन चैत्रादिमासोल्लिखितव्रते शुक्लादि-मासपरिग्रह इति समयप्रदीपः" (२६) ।

"देवपूजा यस्य देवता व्रतं तस्य पूजा । सामान्यव्रते इष्टदेवतापूजा, अग्निहवनं पूज्यदेवतोद्देशोपक्रमादिति समयप्रदीपः" (२७) ।

"यदा पूर्वदिने संक्रान्तिकाले च एकैव तिथिर्भवति तदा पूर्वदिवसस्य शेषार्धमेव पुण्यं यदाह तत्रैव आदौ पुण्यं विजानीयाद् यद्यभिन्ना तिथिर्भवेत्" (२८) ।

स्मार्त्तप्रवरो रघुनन्दनोऽपि यत् श्रीदत्तोपाध्यायेन बहुशः स्वप्रभावमापादितस्तन्न नास्ति सन्देहलेशोऽपि । तत्प्रणीतेषु अष्टाविंशतितत्त्वेषु बहुत्र श्रीदत्तोपाध्यायप्रभावः प्रत्यक्षेणानुभूयते । उपरिष्टादुल्लिखितेषु ग्रन्थेषु श्रीदत्तोपाध्यायनामोट्टङ्कितमास्ते, यथा मलमासतत्त्वे, शुद्धितत्त्वे, तिथितत्त्वे, दुर्गोत्सवतत्त्वे, व्यवहारतत्त्वे, एकादशीतत्त्वे, आह्निकतत्त्वे, छन्दोगश्राद्धतत्त्वे, यजुःश्राद्धे । परन्तु एषु ग्रन्थेषु मध्ये एकादशीतत्त्वे, मलमासतत्त्वे तथा तिथितत्त्वेषु बाहुल्येन तदुदाहरणानि लक्ष्यन्ते । यथा एकादशी-तत्त्वे—

"दीर्घकालानुपालनीयः संकल्पो व्रतमिति" नारायणोपाध्यायानां स्वरसमुल्लिख्यैव रघुनन्दनेन "स्वकर्तव्यविषयो नियतः संकल्पो व्रतमिति श्रीदत्तहरिनाथवर्द्ध-मानप्रभृतयः" (२९) इति श्रीदत्तकृतलक्षणम् उद्धृतम् । श्रीदत्तोपाध्यायकृतमेतद् व्रतलक्षणं

---

(२२) दुर्गोत्सवविवेक, पृ० १९
(२३) रुद्रधर, वर्षकृत्य, पृ० १७१
(२४) रुद्रधर, वर्षकृत्य, पृ० १७३
(२५) रुद्रधर, वर्षकृत्य, पृ० १७९
(२६) रुद्रधर, वर्षकृत्य, पृ० १८१
(२७) रुद्रधर, वर्षकृत्य, पृ० १८२
(२८) रुद्रधर, वर्षकृत्व, पृ० १८६
(२९) एकादशीतत्त्व, पृ० ७

तत्कृतसमयप्रदीपग्रन्थे उपलभ्यते। तत्र श्रीदत्तादीनां मतेऽपि "स्वकर्त्तव्यविषयो नियतः संकल्पो व्रतमिति" लक्षणं परिदृष्टम् (३०)।

रघुनन्दनः पुनः सूर्यादिदेवताभ्यो निवेद्य व्रतं संकल्पयेत् इत्यर्थमवलम्ब्य व्रतसंकल्पयोर्भेदमाह। यद्व भवतु, मैथिलाचार्यास्तु (समयप्रदीपे श्रीदत्तोपाध्यायाः) व्रतस्य इतिकर्त्तव्यतारूपेण सूर्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् इति वचनमुपजीव्य संकल्पव्रतयोरभेदबुद्धिजननार्थं 'संकल्पं कुर्यात्' इत्येतावन्मात्रं तात्पर्यं प्रकाशितवन्तः (३१)।

अन्यत्रापि यथा —

समयप्रदीपेऽपि यत्र पूर्वदिने दशमीविद्धा परदिने द्वादशीमिश्रा, दिनान्तरे द्वादशी न वर्धते तदा द्वादशीमिश्रैवोपोष्या, प्रधानकालानुरोधात्। पारणादौ तु द्वादशीबाध एव। तन्मूलकमेव गौडीयवचनं —

"द्वादश्येकादशीमिश्रा परतोऽपि न वर्धते।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः" (३२)।

अयमपि एकादशीतत्त्वस्यांशविशेषः समयप्रदीपे उपलभ्यते। अन्यच्च दृश्यते —

"यद्यप्येकादश्यां प्रबोधनमुक्तं तथापि तदादिदिनपञ्चकमेव प्रबोधनसमयः। तेन वराहपुराणे द्वादश्यां प्रबोधनविधानम्। यमस्मृतौ कार्त्तिक्यां प्रबोधनविधानं सर्वसमञ्जसमिति। एवमेव श्रीदत्तोपाध्यायः" (३३)।

क्वचित् मलमासतत्त्वस्यांशविशेषे स्मार्त्तप्रवरो रघुनन्दनः श्रीदत्तकृतसमयप्रदीपस्य संज्ञामुल्लिख्योक्तवान्

"यत् समयप्रदीपे श्रीदत्तः

दासीदासमलंकारमन्नं षड्रससंस्कृतम्।
पुरुषोत्तमतुष्ट्यर्थं प्रदेयं सार्वकालिकम्॥
यद्यदिष्टतमं लोके यच्चाप्यस्ति गृहे शुचि।
तत्तद्धि देयं तुष्ट्यर्थं देवदेवस्य चक्रिणः॥

---

(३०) एकादशीतत्त्व, पृ० ११५

(३१) एकादशीतत्त्व, पृ० ११

मैथिलस्तु अद्य भगवन् सूर्य भगवत्यो देवता एतद् व्रतमाचरिष्यामीत्यनेन सूर्याय देवताभ्यश्च निवेद्य संकल्पं कुर्यात्, अनेकाहश्राद्धे तु अद्यारभ्येति विशेष इत्याह।

(३२) एकादशीतत्त्व, पृ० ४४-४५

(३३) एकादशीतत्त्व, पृ० १०५

इदं दानं विष्णुप्रीतिमुद्दिश्य ब्राह्मणसम्प्रदानकमेव। एवं सर्वत्र दाने विष्णुप्रीतेः सामान्यतः उद्देश्यत्वश्रवणात्। विष्णुप्रीतौ देवताधिकरणन्यायविरोध इति चेन्न, स्वर्गवदधिकारिविशेषणत्वेन तत्सत्त्वप्रसाधनादित्याह" (३४)।

तथा च तिथितत्त्वे—

"अत्र अमावास्याष्टमीव्यतिरिक्ताः शुक्लाः, पुनः पुनः तथापदोपादानात्। उपक्रमोपसंहारयोः शुक्लत्वकीर्त्तनाच्च। अत्र कामधेनौ "तृतीया चैव माघस्येति", कल्पतरौ तु "तृतीया चैत्रमासस्येति" लिखितम्, अत्र पाठद्वैधे श्रीपतिरत्नमालायाम् अश्वयुजिशुक्लनवमी द्वादश्यूर्जे मधौ तृतीया च पाठात् चैत्रतृतीयैव ग्राह्या। श्रीदत्तोऽप्येवम्" (३५)।

---

(३४) मलमासतत्त्वे (८३६ पृ०) उक्तं यत् "श्रीविष्णुप्रीतिकामनया ब्राह्मणाय दानमर्थात् ब्राह्मणस्य इदं भवतु इति कामनापूर्वकं दानमिति, तथा श्रीविष्णुप्रीतिकामनया विष्णुसम्प्रदानकं दानम् अर्थात् विष्णोरेवेदमस्तु इतीच्छया दानमिति भेदात् दानं द्विधा भवति। ननु अचेतनमन्त्रमयदेवतायाः कथं द्रव्ये स्वत्वं स्यात् इत्याशङ्कायामुच्यते यद्यपि मन्त्रमयी देवता अचेतना तथापि तदधिष्ठात्री देवता चेतनैव। परन्तु मीमांसकानां मते तादृशी देवता नोद्देश्यीभवति, अतो यागहोमादिषु सर्वत्र अचेतना मन्त्रमय्येव देवतेति।"

यच्चोक्तमनन्तरमेव दासीदासालङ्काराणां श्रीविष्णुप्रीतिकामनया ब्राह्मणस्वत्वोद्देश्यकानीति तत्र देवदेवस्य तुष्ट्यर्थं देयमित्युपादानात् सर्वत्रैव विष्णुप्रीतिकामनया देयम् इत्यवगन्तव्यम्।

अत्रेयमाशङ्का अचेतनमन्त्रमय्या देवतायाः प्रीतिः कथं स्यात्? प्रीतेर्हि आत्मसमवेतसुखभोगेच्छारूपत्वात् देवतायाश्च अनात्मादिति चेन्न, इन्द्रादिपदाधिकारिणो देवाः सचेतना एव तद्गतसुखेच्छा नानुपपन्नेति पूर्वमेव निरुक्तत्वात्। श्राद्धविवेकटीकाकृत श्रीकृष्णतर्कालंकारोऽपि स्वरचितटीकायामेवमाह 'तथा हि इन्द्रपदकामः शताश्वमेधेन यजेत' इत्यत्र पदमधिकारः स्वामित्वलक्षणः तस्याचेतने बाधादिन्द्रपदं विग्रहवत् परमेवेति।

(३५) तिथितत्त्वे रघुनन्दनोऽपि सपरिकरं श्रीदत्ताभिधानमुल्लिख्य तन्मतं वर्णितवान्। एतानि तदुदाहरणरूपेण ग्रहीतुं शक्यानि, यथा तिथितत्त्वे ( पृ० ४० ) मन्वन्तरतिथिविवृतौ—

'अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिकी तथा।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च॥
फाल्गुनस्याप्यमावस्या ···· ······· ।
श्रावणस्याष्टमी कृष्णा ··············· ॥

इत्यादि भविष्यमात्स्यवचनेषु यास्तिथयः प्रोक्तास्ताः सर्वाः शुक्लाः श्रावणस्याष्टमी, फाल्गुनस्यामावस्या च केवलं कृष्णाः ग्राह्याः, तथा हि अश्वयुक्शुक्लनवमीत्यनेन शुक्लोपक्रमः इति। पञ्चदशी सिता मन्वन्तरादयस्त्वेता इत्युपसंहारे सितापदोपादानात् अन्तरान्तरा तथाशब्देन सजातीयार्थबोधनात् शुक्लापरत्वं बोध्यम्। प्रसङ्गत एतदपि

"असवर्णजलदाननिषेधस्तु प्रकरणादपि श्रात्रादिविषय इति श्रीदत्तः" (३६)।

"बहुपत्नीकयजमानप्रयोगेऽपि पत्नीं सन्नह्येति मन्त्र एकवचनान्त एवेत्युक्तम् इति श्रीदत्तोपाध्यायेन दृष्टान्तीकृतम्।"

न तु श्रीदत्तहरिनाथविद्यावाचस्पतिमिश्रोक्ता शतभिषा, तदष्टम्यां तस्या अलाभात्, तथात्वे तदनन्तरपौर्णमास्यां गोभिलोक्तसूर्याचन्द्रमसोः सप्तमराश्यवस्थाननियमभङ्गापत्तेः (३७)।

---

बोद्धव्यं यत् तृतीया चैत्रमासस्येति स्थाने कामधेनुग्रन्थे तृतीया चैव माघस्येति, कल्पतरौ तु तृतीया चैत्रमासस्येति पाठद्वये श्रीपतिरत्नमालायाम् अश्वयुजिशुक्लनवमी द्वादश्यूर्जे मधौ तृतीया चेति पाठात् चैत्रतृतीयैव ग्राह्या तत्समर्थनाय रघुनन्दनेनोक्तं श्रीदत्तोऽप्येवम्। अतः श्रीदत्तस्य उक्तिः प्रमाणत्वेन गृहीता इत्यवधेयम्।

(३६) तिथितत्त्व, पृ० ५८। भीष्माष्टम्यां ( चान्द्रमाघमासीयशुक्लाष्टम्यां ) भीष्मतर्पणं सर्वैरेव कार्यम्, ब्राह्मणेनापि असवर्णस्य क्षत्रियस्य तर्पणं करणीयम्। असवर्णानां श्राद्धतर्पणादिनिषेधस्तु प्रकरणात् श्रात्रादिविषयक एवेति श्रीदत्ताभिप्रायः। रघुनन्दनस्तु

ब्राह्मणस्त्वन्यजातीनां यः करोत्यौर्ध्वदेहिकम्।
तद्वर्णत्वमसौ याति इहलोके परत्र च॥

इति मरीचिवचनं तु भीष्मकृत्येतरपरमिति सामान्यविशेषन्यायमनुसृतवान्।

(३७) तिथितत्त्व, पृ० ६५।
अन्यच्च देवीपुराणे उल्लिखितं यत्

'कन्यासंस्थे रवावीशे शुक्लाष्टम्यां प्रपूजयेत्।
सोपवासो निशार्धे तु महाविभवविस्तरैः।
पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा॥'

अत्र निसर्गतो वारुणपदस्य वरुणदैवतं जलमर्थात् वरुणदेवाधिष्ठितनक्षत्रं पूर्वाषाढोच्यते, श्रीदत्तहरिनाथविद्यावाचस्पतिमिश्रास्तु शतभिषेति, तन्नक्षत्रस्थितशुक्लाष्टम्यामेव पूजा विधेया इत्याहुः, तन्न, तदष्टम्यां (चान्द्राश्विनीयशुक्लाष्टम्याम्) तस्याः (शतभिषायाः) अलाभात्। तथात्वे तदनन्तरपौर्णमास्यां गोभिलोक्तसूर्याचन्द्रमसोः सप्तमराश्यवस्थानरूपनियमभङ्गापत्तेरिति स्मार्त्तस्याक्षेपः। अयमभिप्रायः – ज्योतिश्शास्त्रनियमानुसारेण पौर्णमास्यां सूर्याचन्द्रमसोः समसप्तमराश्यवस्थानं भवत्येव। अर्थात् यस्मिन् राशौ सूर्यस्यावस्थितिस्तद्राशेः सप्तमे राशौ चन्द्रस्यावस्थानमेव समसप्तकमित्युच्यते, परन्तु गणनाबलादायाति यत् शुक्लाष्टम्यां चन्द्रभोग्ये शतभिषानक्षत्रे सति पौर्णमास्यां कन्यास्थरवेः समसप्तकत्वं न भवतीति। अतः स्मार्त्तोक्तवारुणपदस्य जलदेवताकपूर्वाषाढानक्षत्ररूपोऽर्थः श्रेयान् इति। तदष्टम्यामेव देव्याः पूजनं विधेयम्।

रघुनन्दनप्रणीते आह्निकतत्त्वेऽपि परिलक्ष्यते
"जलक्षित्योः संस्कारोऽपिनास्तीति श्रीदत्तप्रभृतयः" (३८) ।

एवं च अनुमीयते यत् श्रीदत्तोपाध्यायः चण्डेश्वरशूलपाणिरुद्रधरवाचस्पतिमिश्र-रघुनन्दनेभ्यः प्राचीनः । ऐतिहासिकानां पण्डितानां सिद्धान्तानुसारेण चण्डेश्वरस्य जीवितव्यकालः चतुर्दशशतकीयचतुर्दशखृष्टाब्दात् प्रभृति चतुःषष्ठिवर्षयावदिति(३९) । अतश्च निःसंशयमेतद् वक्तुं शक्यते यत् श्रीदत्तोपाध्यायः अस्मात् कालात् प्रागवर्त्तत इति ।

किं च श्रीदत्तस्य जीवितव्यकालस्य अपरा या दिक् तन्निर्णयो नाशक्यप्रायः । स हि तस्य समयप्रदीपग्रन्थे आचारादर्शग्रन्थे च बहुशो हरिहरस्य नामोल्लिलेख । अत्र कियन्त्युदाहरणानि आचारादर्शग्रन्थादुपस्थाप्यन्ते ।

"आपस्तम्बः सशिरोऽवमज्जनमप्सु वर्जयेदस्तमिते च स्नानं सशिरोऽवमज्जनं ......कार्यं हरिहरेण अशिरोऽवमज्जनं इति पठितम्" (४०) ।

"अत्र प्राञ्चः अप्रतिष्ठितमात्रेषु पिण्डोद्धारस्तस्यैव परकीयत्वाद् इत्याहुस्तन्नेति हरिहरादयः" (४१) ।

"एवं च तमर्थं प्रतिमामार्जनमात्राभावोऽसमर्थं प्रतिपाणिशाटीमार्जनाभाव इति हरिहरोक्तमश्रद्धेयम्" (४२) ।

"हरिहरोऽपि क्रियास्नानप्रातःस्नानयोरेव धर्मानाह" (४३) ।

"हरिहरस्तु जलसमीपस्थेन तर्पणजलं जल एव प्रक्षेप्तव्यमिति" (४४) ।

"याज्ञवल्क्यवचनात् पितृतर्पणे स्वधा नमः इति हरिहरमते" (४५) ।

"अत एव योगियाज्ञवल्क्यकल्पात् स्मृतिमहार्णवलिखितं मरीच्यादितर्पणं पद्म-पुराणाद्धरिहरेणोक्तम्" (४६) ।

"अत्र हरिहरः देवादीनां ओं देवास्तृप्यन्तामित्यादिवाक्येन तर्पणम्" (४७) ।

---

(३८) आह्निकतत्त्वग्रन्थस्य १५३ पृष्ठे लिखितम्—बलिवैश्यदेवयोः कर्मणोः आधार-भूतं जल भूमिर्वा यदि भवेत् तत्र अग्नेरिव संस्कारो नापेक्ष्यते असंस्कृतायामेव भूमौ जले वा वैश्वदेवमनुष्ठातुं शक्यते ।

(३९) पि० भि० काने, हिष्ट्रि अफ धर्मशास्त्र, भल्युम १, पृ० ३७२

(४०) आचारादर्श, पृ० १० क

(४१) आचारादर्श, पृ० १० ख

(४२) आचारादर्श, पृ० १६ क-ख

(४३) आचारादर्श, पृ० १२ ख

(४४) आचारादर्श, पृ० २५ क

(४५) आचारादर्श, पृ० २६ ख

(४६) आचारादर्श, पृ० २७ क

(४७) आचारादर्श, पृ० २७ ख

"हरिहरस्तु वाजसनेयिनां जपानन्तरमेव तदनुष्टानेन ..................." (४८) ।

अस्माभिस्तु सम्पादिते श्रीदत्तोपाध्यायस्य पितृभक्तिग्रन्थेऽपि बहुशो हरिहरस्योल्लेखो दृश्यते, यथा –

"श्वः कर्तास्मीति निश्चित्य दाता विप्रान् निमन्त्रयेत् ।

निरामिषं सकृद् भुक्त्वा सर्वभुक्तजने गृहे ।

असम्भवेऽप्यशक्तौ वा ब्राह्मणान् न निमन्त्रयेत् ॥

इति देवलः । अत्र हरिहरः—पूर्वदिननिमन्त्रणे एकत्रभोजनमङ्गमित्याह, तन्न ।"

"एवमन्यत्रापि मन्त्रावृत्त्यनावृत्ती बोद्धव्ये । गन्धादिकं ब्राह्मणार्थमेव, न तु पित्राद्युद्देशेन त्यक्तव्यमिति हरिहरः ।"

"एवं च सपवित्रकुशास्तरणमर्थात् पिण्डोपरि, अत एव हरिहर आस्तीर्य पिण्डोपरि इति शेषं प्रति व्याख्यातवान् ।"

"हरिहरादयस्तु शुन्धन्तां पितर इत्यादिमन्त्रः अवनेजनप्रत्यवनेजनयोर्वा आश्वलायनोक्तेः ।"

श्रीदत्तः स्वरचितेषु कतिपयग्रन्थेषु एव बहुशः कल्पतरोर्मतमुल्लिखितवान् । तथा हि आचारादर्शे –

"कल्पतरुकारस्तु पूर्ववत्" (४९) ।

"प्राणाहुतिसन्निकर्षादिति कल्पतरुकारादीनाम्" (५०) ।

"सुमुहूर्त इति विहितपूर्वाह्णादिकालपरं रक्तं कुङ्कुममिति कल्पतरुकारः" (५१) ।

पितृभक्तिग्रन्थेऽपि कल्पतरुनामोल्लिखितमास्ते ।

तथाहि –

"अत्र कल्पतरुकारः । पितृनुद्दिश्य द्रव्यत्यागो ब्राह्मणस्वीकारपर्यन्तः श्राद्धमित्याह । तदयुक्तम्, प्रेतश्राद्धाव्यापनात् ।"

"मातामहानामप्येवमिति सामान्यातिदेशात् न्युब्जमधोमुखमुत्तरतो ब्राह्मणादुत्तरस्यां दिशीति कल्पतरुक्तः । तन्न ।"

"कल्पतरावप्यादिपदेन तिलपुष्पपवित्राणां ग्रहणमिति व्याख्यातम् ।"

"अत एव अशनाय मतेऽनुमते वेति पदं न देयम् । कल्पतरौ चैवमेव व्याख्यातम् ।"

---

(४८) आचारादर्श, पृ० २९ ख

(४९) आचारादर्श, पृ० २५ क

(५०) आचारादर्श, पृ० ६ ख

(५१) आचारादर्श, पृ० ३१ क

"अन्येषां तु प्राचीनावीतादिपितृधर्म एव विरोधाभावे सति बोद्धव्येति व्यवस्था। कल्पतरौ हलायुधीयश्राद्धाध्याये च शाखाभेदेन व्यवस्थोक्ता।"

"न च पृथक्करणाभावे यत्र पिण्डो दीयते तत्र पृथक् पिण्डमेकोद्दिष्टमिति कल्पतरुव्याख्यानमपि रमणीयं बहुव्रीहेर्जघन्यत्वात्।"

"प्रचरदपि परित्यक्तमज्ञातमूलमिति कल्पतरुकृता प्रतिज्ञा, अनादेशानां च वाक्यानां त्यागान्निर्मूलत्वमिति चेत् तत्राज्ञातमूलत्वस्य मूलसन्देहेऽप्युपपत्तेः।"

"ब्रह्मपुराणीयं पित्रादित्रयपरभूतपुरुषत्रयं नान्दीमुखाभिधानम्। पित्रादित्रिके जीवति शाखान्तरविषयमिति वा कल्पतरुकृता 'सूर्येन्दुकर्मणी ये तु तयोः श्राद्धं न विद्यते' इति परिशिष्टवचनात् सूर्यदर्शनचन्द्रदर्शनयोः श्राद्धं नास्तीत्युक्तम्। तदपरे दूषयन्ति।"

"इष्टिश्राद्धपदेन कर्माङ्गश्राद्धमेवोच्यते, अतः कर्माङ्गश्राद्धे क्रतुयज्ञो मुख्यः। कल्पतरुकारस्तु इष्टिश्राद्धमिष्टाश्राद्धं प्रति तूद्दिश्येत्यनेन विहितमित्याह।"

"अत्र महार्णवप्रकाशे कल्पतरौ हलायुधीयश्राद्धाध्याये च व्यवस्थोक्ता। औरसक्षेत्रजाभ्यां साग्निभ्यां मृताहे पार्वणं कर्त्तव्यम्। इतरैस्तु दशभिः पुत्रैर्निरग्निभिः साग्निभिश्च एकोद्दिष्टं कर्त्तव्यम्" (५२)।

इदमत्र विचार्यते कल्पतरुकारलक्ष्मीधरस्य जीवितव्यकालस्तावत् अनुमानतः एकादशशतकस्य प्रथमवर्षात् आरभ्य तत्पञ्चाशत्वर्षपर्यन्तः इति सिद्धान्तितम् (५३)। हरिहरस्तु तस्मादुपरिष्टात्कालीन इति च।यतो हि स स्वग्रन्थे लक्ष्मीधरकृतकल्पतरुग्रन्थस्य नामोल्लिखितवान्। परन्तु नातिव्यवधानं तत्कालादेतत्कालस्य इति मन्तव्यम्। अत्र हेतुः—हेमाद्रिकृतस्य (त्रयोदशशतकस्य मध्यभागे) चतुर्वर्गचिन्तामणिग्रन्थस्य अन्तिमखण्डे हरिहरस्य नामोल्लिखितमास्ते। अतो हरिहरस्य स्थितिकालः द्वादशशतकात् प्रभृति तच्छतकीयपञ्चाशत् खृष्टाब्दाभ्यन्तर एव वक्तुं शक्यते। डक्टर पि० भि० काने महोदयोऽपि एतत् समर्थितवान् (५४)।

अनयैव सरण्या श्रीदत्तोपाध्यायस्य जीवितव्यकालोऽपि अनुमानतो निर्णेतुं शक्यते यत् सप्तत्युत्तरद्वादशशतकादूर्ध्वं त्रयोदशखृष्टजन्मशतकाभ्यन्तरे एव निर्बाधः इति। अयं च समयोऽन्यथापि समर्थयितुं शक्यः। तथा हि श्रीदत्तोपाध्यायः स्वरचिते आचारादर्शग्रन्थे कस्यचित् गणेशमिश्रस्य नाम निरदिशत् (५५)। डक्टर पि. भि. काने

(५२) पितृभक्ति, पृ० २५ क

(५३) पि० भि० काने, हिष्ट्रि अफ धर्मशास्त्र, भल्युम १, पृ० ३१७

(५४) पि० भि० काने, हिष्टि अफ धर्मशास्त्र, भल्युम १, पृ० ३४२

(५५) अशिरस्कं मार्जनमिति गणेशमिश्रः —

आचारादर्श (डेकान कलेज) ३४२, पृ० १५ ख। १९३९ संवति काश्यां मुद्रिते आचारादर्शग्रन्थे अयं पाठो नैवोपलभ्यते।

महोदय इमं गणेशमिश्रं मिथिलावासिनश्चण्डेश्वरस्य पितृव्यात् सुगतिसोपानलेखकाद् गणेशमिश्रादभिन्नमसाधयत्। परन्तु इदमत्र चिन्त्यम्, यद्ययं चण्डेश्वरपितृव्य एव आचारादर्शोक्तो गणेशः स्यात् तर्हि स एव नूनं श्रीदत्तसमकालीनः स्यात् यतो हि गणेशो यत् त्रयोदशशतकस्य शेषार्धे ग्रन्थादिकं प्रणिनायेति तत्र नास्ति सन्देहावकाशः। श्रीदत्तस्य जीवितव्यकालः त्रयोदशशतकस्य शेषार्ध इत्यत्रापि न सन्देहलेशः। अतश्च इमं गणेशं चण्डेश्वरस्य पितृव्यगणेशत्वेनावधारणं न संगच्छते। किं चान्यत् प्रमाणमपि तत्र जागर्त्ति। तथा हि यदि ठक्कुरवंशजातो गणेश एव उल्लिखितोऽभविष्यत् तदा तं चण्डेश्वरठक्कुरवत् गणेशठक्कुर इति यद्वा महामन्त्रिगणेश इति आहोस्वित् महामात्य-गणेश्वर इत्याद्युपाधिविशेषैरभूषयिष्यत्। वयं तु मन्यामहे आचारादर्शग्रन्थवर्णितो गणेशमिश्रो न तावत् गणेशठक्कुर इति, अपि तु तस्मादपि कियता कालेन प्राचीनतर इति। वस्तुतस्तु हरिनाथोपाध्यायः स्वरचितस्मृतिसारग्रन्थे, विद्यापतिः गङ्गावाक्या-वल्ल्यां, वाचस्पतिमिश्रः श्राद्धचिन्तामणिग्रन्थे च, (धृतात् प्रेत्यागतश्चापि पुनस्तथैव देवान् पितॄन् ब्राह्मणान् पूजयेच्चेति ब्रह्मपुराणवचनात् इदं च श्राद्धम् आभ्युदयिकमिति प्रतिहस्तकादयः पठन्तीति गणेश्वरमिश्राः –नवमपृष्ठे) गणपतिरपि तत्कृतगङ्गाभक्तित-रङ्गिण्यां यद् गणेश्वरमिश्रस्य नाम उल्लिखितवान् स एव श्रीदत्तेन निर्दिष्टः। त्रयोदशशतकस्य प्रथमार्ध एव तस्य रचनासमय इति।

इत्थं च श्रीदत्तोपाध्यायस्य जीवितव्यकालः सप्तत्युत्तरद्वादशशतकात् प्रभृति त्रयोदशशतकपर्यन्त इति वक्तुं शक्यते।

नानाग्रन्थालयेषु निहितेभ्यः पुस्तकसंग्रहेभ्यः मातृकाचयेभ्यश्च वयं श्रीदत्तो-पाध्यायलिखितानां साकल्येन षट्पुस्तकानां परिचयं लभामहे। यथा—

(१) आचारादर्शः (२) छन्दोगाह्निकम्
(३) पितृभक्तिः (४) श्राद्धकल्पः
(५) शुद्धिनिर्णयः (६) समयप्रदीपः

अन्यच्च व्रतपद्धतेर्व्रतसारग्रन्थस्य वा लेखकोऽपि श्रीदत्तोपाध्याय इत्यनुमातुं शक्यते। मिथिलायाः पुस्तकसंग्रहपरिचये (पृ० ४०१) व्रतपद्धतिरिति नाम्ना श्रीदत्तो-पाध्यायग्रन्थ उल्लिखित आस्ते। डक्टर पिटारसनाभिधेयमनीषी स्वसम्पादिते आलओयारनाम्नि ग्रन्थसंग्रहे (६४ पृष्ठे) श्रीदत्तरचितमपरमेकं व्रतसारनामकं ग्रन्थं समुल्लिलेख। परन्तु निरुक्तं ग्रन्थद्वयं समयप्रदीपग्रन्थान्न पृथक् इति समीक्ष्यैवावे गच्छामः। तस्य च ग्रन्थस्योपक्रमिकं श्लोकद्वयमित्थम्—

"श्रेयः समादिशतु सालसपक्ष्मपाते
निद्रायिते अपि दृशौ भृशमुन्नमय्य ।
संबाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः" ॥

अथ च—

"निबन्धेषु निबद्धानि वचनानि विचिन्वता ।
श्रीदत्तेन व्रतादीनां सारमाकृष्य लिख्यते ॥"

किं बहुना, एतच्छ्लोकद्वयं समयप्रदीपग्रन्थस्योपक्रमे दृश्यते। अतो व्रतसारो व्रतपद्धतिर्वा यत् समयप्रदीपग्रन्थस्यैव नामान्तरं तदनाक्षेपमेवानुमेयमिति।

उल्लिखितेषु श्रीदत्तोपाध्यायग्रन्थेषु आचारादर्शग्रन्थस्तथा श्राद्धकल्पग्रन्थमात्रं मुद्रापितमास्ते (५६)। आचारादर्शग्रन्थो भूयसीं जनबहुमानास्पदतां लेभे, यतो हि अस्य द्वावेव टीकाग्रन्थौ रचितौ। तयोः प्रथमस्य नाम आचारादर्शव्याख्या (५७)। अपरस्य च आचारादर्शबोधिनीति (५८)। आचारादर्शग्रन्थस्योपक्रमिकश्लोकादेव अवगम्यते यदयं ग्रन्थो वाजसनेयिनां ब्राह्मणानां धर्मोपयोगिनीतिकर्त्तव्यतां निरूपयतीति। उक्तं च –

"अहोरात्राश्रितो धर्म इह वाजसनेयिनाम् ।
निबध्यते निबन्धो यो धर्मशास्त्रनिबन्धृभिः" (५९) ॥

इह ह्याचारादर्शग्रन्थे संक्षेपतो वक्ष्यमाणा विषया निरूपिताः। यथा – निद्राभङ्गः, शौचादिप्रातःकृत्यम्, आचमनानुकल्पविधिः, आचमनापवादः, दन्तधावनम्, तदाश्रिता मन्त्राः, तत्र निषिद्धकाष्ठादीनि, प्रातःस्नानविधिः, स्नानान्तकल्पाः, नित्यस्नानम्, अन्तर्जले अघमर्षणं, स्नानान्तरं वस्त्रपरिधानं, तत्रार्द्रवस्त्रपर्युदासः, सन्ध्योपासना, तत्समाप्तिकालः, पवित्रधारणम्, गायत्रीतत्त्वम्, प्राणायामः, आचमनम्, मार्जनम्, अघमर्षणम्, सूर्याघ्यंदानम्, निषिद्धकुशाः, प्रशस्तकुशाः, सन्ध्याप्रयोगः, ब्रह्मयज्ञः, तर्पणम्, देवतर्षिपितृमरीच्यादीनां तर्पणान्तरकृत्यानि, देवपूजा, तत्र पञ्चोपचारपरिचयः, पुष्पाणि, धूपो, दीपो, नैवेद्यम्, देवताविशेषे पर्युदस्तानि पुष्पाणि,

(५६) काश्यां १९२४ संवति १९३९ संवति च प्रकाशितः आचारादर्शः
(५७) मिथिला क्याटालग, पृ ३१
(५८) हरप्रसाद शास्त्री, डेसक्रिपटिभ क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन दि गभर्णमेन्ट कालेकसन आण्डार दि केयार अफ दि एसियाटिक सोसाइटि, भल्युम ३, पृ २२१
(५९) आचारादर्श, पृ १

पूजाफलम्, पूजनोत्तरकर्म, बलिवैश्यदेवौ, पञ्चयज्ञनिरूपणम्, नित्यश्राद्धम्, भिक्षादानम्, भोजनविधिः, अभोज्यानि, प्राणाहुतिक्रमः, भोजनपात्रपर्युदासः, जलपानप्रकारः, हस्तक्षालनविधिः, शयनविधिः, दारोपगमः, मैथुनोत्तरशुद्धिः, तत्र वारतिथिनक्षत्रविशेषपर्युदासः।

उक्तानामेतेषां विषयाणां विचारकाले ग्रन्थकृता मनुवसिष्ठपद्मपुराणलघुहारीतमरीचिच्छन्दोगपरिशिष्टगोभिलवायुपुराणबौधायनकालिकापुराणयाज्ञवल्क्यसंहितेत्यादिधर्मग्रन्थानामंशविशेषा आलोचिताः। अन्यच्च एतदनन्तरकालीनग्रन्थेषु आचारचिन्तामणिः, कल्पतरुः, कामधेनुः, राजकृतग्रन्थः (भोजदेवीयः), स्मृतिमहार्णवः इत्यादयस्तथा गणेशमिश्रेण, हरिहरेण, हलायुधेन च निबद्धग्रन्थानां परिचया उपलभ्यन्ते। न केवलं तथा, श्रीदत्तोपाध्यायोऽपि तदीयग्रन्थेषु क्वचिदेकत्र छन्दोगाह्निकस्य नामाचारादर्श उदलिखत् (६०)।

छन्दोगाह्निकग्रन्थस्तत्त्वतः आचारादर्शग्रन्थस्यैव न्यूनतापरिपूरक इति वक्तुं शक्यते। तथा हि आचारादर्शग्रन्थो यथा यजुषाम् आदरार्हः, तथा सामगानामपि छन्दोगाह्निकग्रन्थो नित्यकृत्यवर्णनात् समादरणीयतां भजते। अत्र हि ग्रन्थे प्रातःकालीनशय्यात्यागात् प्रभृति नैशशयनावधिः कृत्यनिचयोऽवश्यज्ञातव्यो वर्णितः, प्रसङ्गत एतदपि समुल्लेख्यं यदस्मिन् आचारादर्शे न तावत् कापि तत्त्वसमस्या विप्रतिपत्तिर्वा अवतारिता परन्तु छन्दोगाह्निकग्रन्थे अन्तरान्तरा यद्यपि कापि समस्या वितर्को वा दृश्यते तथापि मनीषी श्रीदत्तोऽसामान्यप्रतिभाबलेन तेषां सर्वेषां समाधानं कृतवान्। यदि वस्तुसिद्धौ कुत्रापि उपजीव्या वैदिकमन्त्रा न दृश्यन्ते तदा पञ्चरात्रसंहिता पञ्चरात्रं वा सहायकभावेनाश्रयणीयम् इति श्रीदत्तमतम्। तत्र हेतुप्रदर्शनावसरे श्रीदत्तेनोक्तं यद् वयं महाभारते वराहपुराणे च पञ्चरात्रस्य प्रशस्यतामुपलभामह इति (६१)। अत एव पञ्चरात्रसंहिता वेदाबाह्येति स्वीकृतिः। श्रीदत्तोपाध्यायस्तु मन्यते नहि वेदाबाह्यमात्रमेव वेदविरोधीति। यद्धि वेदविरोधि तन्न खलु कदाचिदपि आस्तिकदर्शने प्रमाणत्वेन गृहीतमिति। परन्तु वेदबाह्यमपि यदि तद् वेदाविरोधि स्यात् तर्हि तस्य प्रामाण्याभ्युपगम एव संगच्छत इत्येव श्रीदत्तस्याकूतम्। स्मृतिनिबन्धेषु अभ्युपगतप्रामाण्या

(६०) आचारादर्श, पृ० ३१ ख एव तु मन्त्रपाठ इत्याद्यस्मत्पक्षनिरासविस्तारछन्दोगाह्निकेऽनुसन्धेयः।

(६१) छन्दोगाह्निक, पृ० २८ क सा च (विष्णुपूजा) पुरुषसूक्तेन, विष्णुसंहितया विष्णुकल्पेन वा। वेदमन्त्राभावे पञ्चरात्रकल्पैरेव। ... ... पञ्चरात्रनिर्मूलत्वाभिधानं तु निर्मूलमेव, अलाभे वेदमन्त्राणां पञ्चरात्रोदितो विधिरिति वराहपुराणसंवादात्, महा

अवैदिकपञ्चरात्रसंहितादिग्रन्थाः (६२) सामाजिकव्यवहारे धर्मानुगतजीवने च महदेकं परिवर्त्तनम् आनीतवन्तः (६३)। न खल्वेतदेव पर्याप्तम्। श्रीदत्तोत्तरकालेऽपि मैथिल-स्मृतिनिबन्धकारा भूयस्तत्प्रभावमङ्गीकृतवन्त इत्यकामेनापि वाच्यम्। किं बहुना, मिथिलाप्रदेशस्य ऐतिह्यपरिचये इदमेवोपलभ्यते यत् श्रीदत्तोपाध्याय एव तादृशः प्रथमः स्मृतिनिबन्धकाराणां यः खलु अवैदिकग्रन्थानपि प्रमाणपदवीमारोपयदिति। अनेनैव-मार्गेण छन्दोगाह्निकग्रन्थस्यापि सप्रयोजनकत्वमैधिष्ट। अस्यैव ग्रन्थस्य अपरस्मिन्नंशे स प्राचीनस्मृतिनिबन्धं कामधेनुग्रन्थं भोजराजविरचितग्रन्थवत् सप्रमाणम-वर्णयत् (६४)। वस्तुतस्तु लोकप्रसिद्ध्या कामधेनुग्रन्थो भोजराजकृत इत्यभ्युपेयते। अस्य छन्दोगाह्निकग्रन्थस्य संवादं स स्वकीयसमयप्रदीपग्रन्थे पितृभक्तौ च उपनिबद्ध-वान्। अत्र ग्रन्थे स कल्पतरोः, कामधेनोः, कर्मप्रदीपस्य, गोपालस्य, छन्दोगपद्धतेः, भूपालस्य, मिताक्षरायाः, रत्नकरण्डिकायाः, भोजकृतश्राद्धकल्पस्य, स्मृतिमञ्जूषायाः, स्मृतिमहार्णवस्य च ग्रन्थानां नामानि समुल्लिलेख। वाचस्पतेः पितृभक्तितरङ्गिण्यां, चण्डेश्वरस्य गृहस्थरत्नाकरे एवमन्येष्वपि ग्रन्थेषु छन्दोगाह्निकस्य समुल्लेखो वर्तते।

छन्दोगाह्निकग्रन्थस्तावत् अल्पीयसैव कालेन जनबहुमान्यतामर्जितवान् नास्ति तत्र सन्देहलेशोऽपि। एतदुपरितनकाले महामहोपाध्यायः शङ्करमिश्रनामधेयो मैथिलः कश्चन स्मार्त्तश्छन्दोगाह्निकोद्धाराभिधं कञ्चिदेकं छन्दोगाह्निकस्य मर्मप्रकाशकं ग्रन्थं प्रणीतवान् (६५)।

श्रीदत्तस्य पितृभक्तिसंज्ञो द्वितीयो ग्रन्थः समुल्लेखयोग्यः। इदमधिकमुच्यते यद् वाचस्पतिमिश्रप्रणीतया पितृभक्तितरङ्गिण्या सहास्य ग्रन्थस्य कापि सङ्गतिर्नास्ति।

---

भारतादौ प्रशंसितत्वात्। न च पञ्चरात्राप्रामाण्यव्यवस्थापकवेदान्तीयेन विरोधः। तस्य वेदविरोधात्माद्युपदर्शकशाण्डिल्यादिपञ्चरात्रगोचरत्वात्। भट्टवार्त्तिककारीयपञ्च-रात्राप्रामाण्याभिधानमपि वेदविरुद्धार्थविषयमेव।

(६२) कुमारिल भट्ट, बाह्यग्रन्थानामप्रामाण्यनिरूपणम्।

(६३) ब्रह्मसूत्र, शांकरभाष्य २,२ ४२-४५ उत्पत्त्यधिकरणम्।

(६४) छन्दोगाह्निक, २९०३ एसियाटिक सोसाइटि, पृ० १०ख अत एव कात्यायनीयस्नानविधिः राज्ञाऽलिखितोऽपि शिष्टैरनुष्ठीयते, कामधेनौ च लिखित इति। राज्ञाऽलिखितोऽपि गोभिलतर्पणविधिः कामधेनुलिखित इति।

(६५) छन्दोगाह्निकस्य हस्तलिखितग्रन्थाः अत्र समुपलभ्याः :—

(क) हरप्रसाद शास्त्री, डेसक्रिपटिभ क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन दि गभर्णमेन्ट कालेक्सन आण्डार दि केयार अफ दि एसियाटिक सोसाइटि, भल्युम ३, पृ० ३५०-३५२।

परं यजुरधीतिब्राह्मणानां श्राद्धतत्त्वमेव एतद् ग्रन्थस्याभिधेयम्। ग्रन्थारम्भे श्रीदत्तेन उररीकृतं यत् 'मदीयोऽयं ग्रन्थः गोपालभूपालेन (राज्ञा भोजदेवेन) विरचितं ग्रन्थमवलम्ब्य कर्कभाष्येण सह कातीयकल्पं च उपजीव्य विरचितः' इति। (६६) अत्र ग्रन्थे श्राद्धलक्षणं वैशद्येन समीक्षितम् तथा पार्वणमेकोद्दिष्टं, सपिण्डनं, मासिकश्राद्धमाशौचान्तद्वितीयदिनविधेयं श्राद्धमाभ्युदयिकं च विशेषतो निरूपितानि।

श्रीदत्तोपाध्यायादुपरिष्टाज्जाताः स्मृतिनिबन्धकारा अस्माद् ग्रन्थात् प्रयोजनानुसारेण यदृच्छया अंशविशेषान् उदजीहरन्। अयमत्र विशेषः—ये खलु इमं विषयमवलम्ब्य आलोचितवन्तः यथा रुद्रधरवाचस्पतिमिश्रप्रमुखास्ते हि इमं पितृभक्तिग्रन्थमाकरग्रन्थत्वेनाभ्युपगतवन्तः। वाचस्पतिमिश्रो हि मैथिलस्मार्त्तेषु वरिष्ठ इत्युच्यते। परन्तु तत्कृतश्राद्धचिन्तामणिना सह श्रीदत्तप्रणीतपितृभक्तिग्रन्थस्य समीकरणोपयोगिन्यां समीक्षायां प्रथमवर्णितस्य ग्रन्थस्योपरि चरमोक्तग्रन्थस्य प्रभाव इति सुस्पष्टमेव प्रतीयते। यद्यपि वाचस्पतिमिश्राः बहुशः क्षेत्रेषु स्वमतं न विवृतवन्तः (६७), तथापि श्रीदत्तमतं समुल्लिलिखुः। अस्मिन् ग्रन्थे श्रीदत्तः कामधेनुराजनिबन्धगौडीयस्मृतिप्रभृतीनां निबन्धानां प्रामाणिकत्वम् अन्वीक्षितवान्। कामं गौडीयस्मृतिनिबन्धान् स यथेच्छं व्यवहृतवान्, तदपि बहुष्वंशेषु गौडीयनिबन्धकाराणां मतं न समर्थितवान्। मीमांसादर्शनीयस्मृतिप्रामाण्याधिकरणं (६८) प्रति पाठकानां

---

(ख) मिथिला क्याटालग, पृ० १२८-१३१।

(६६) पितृभक्ति (डेकान कलेज म्यानुसक्रिप्ट नं० १५२, १८९२-१८९५) द्रष्टव्यः प्रथमश्लोकः—

> कातीयकल्पं सहकर्कभाष्यं गोपालभूपालमतादि दृष्ट्वा।
> सतां च वाच्यानि निशम्य सम्यग् यजुर्विदां श्राद्धविधिं विधास्ये॥

(६७) पितृभक्ति, पृ० २५ क

अत्र महार्णवप्रकाशे कल्पतरौ हलायुधीयश्राद्धाध्याये च व्यवस्थोक्ता औरसक्षेत्रजाभ्यां साग्निभ्यां मृताहे पार्वणं कर्त्तव्यम् इतरैस्तु दशभिः पुत्रैः निरग्निभिः एकोद्दिष्टं कर्त्तव्यम्। तथा च वाचस्पतिपादानां श्राद्धचिन्तामणौ (पृ० १३६) अपि "अत्र च प्रकाशहलायुधकल्पतरुपारिजातपितृभक्तिप्रदीपविवेकेषु इयं व्यवस्था यद् औरसक्षेत्रजाभ्यां मृताहे पितुः पार्वणं कर्त्तव्यम्..................एकोद्दिष्टं..................साग्निभ्यामौरसक्षेत्रजाभ्यां पार्वणेतिकर्त्तव्यतया एकोद्दिष्टमेव कार्यम् इति रत्नाकरः"।

(६८) मीमांसासूत्र, स्मृतिप्रामाण्याधिकरण, १, ३, १; १, ३, २

> धर्मस्य शब्दमूलत्वात् अशब्दम् अनपेक्षं स्यात्
> अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्।

दृष्टिमाकर्षयन् गौडीयस्मृतिनिबन्धानामपरीक्षिततत्त्वान्यपि खण्डयामास । वाचस्पतेः श्राद्धचिन्तामणिं विना रुद्रधरस्य श्राद्धविवेकग्रन्थे यत्र अस्य पितृभक्तिग्रन्थस्य समुल्लेखोऽस्ति तत्र पितृभक्तिग्रन्थः प्राचीनगौरवमर्जयाम्बभूव । श्रीदत्तोपाध्यायोऽपि पितृभक्तिग्रन्थे यत्र यत्र येषां ग्रन्थानां नामानि येषां च ग्रन्थकाराणामभिधानानि उदाहरत् तानि सर्वाणि समुत्थाप्यन्ते यथा—कर्कः, कर्कभाष्यं, कल्पतरुः, कल्पतरुकारः, कामधेनुः, गोपालः, छन्दोगश्राद्धकल्पः, भूपालः, रत्नकरण्डिका, राजा भोजदेवः, शोभाकरः, पितृहितकरणिकारः, आश्वलायनगृह्यसूत्रस्य नारायणीवृत्तिः, मिताक्षरा, विधिपुष्पमाला, स्मृतिमञ्जरी, स्मृतिमञ्जूषा, स्मृतिमहार्णवप्रकाशः, हलायुधस्य श्राद्धाध्यायश्चेति । (६९) अस्य पितृभक्तिनाम्नो ग्रन्थस्य (७०) महादेवकृता पितृभक्तिचर्चा (७१), मुरारिकृता पितृभक्तिव्याख्या (७२) च द्वौ विवृतिग्रन्थौ परिचीयेते ।

श्रीदत्तोपाध्यायस्यापरः प्रसिद्धो ग्रन्थो श्राद्धकल्पो नाम । वैदिकसाहित्येतिहासपर्यालोचनेन इदमेव ज्ञायते यत् तत्र श्राद्धाध्यायस्यैव श्राद्धत्वेन परिचितिः । अनया दिशा श्रीदत्तस्य ग्रन्थनामानि पाठकानाम् ईषद् विभ्रान्तिविषया भवितुमर्हन्ति । श्रीदत्तः अस्मिन् ग्रन्थे सामगानां श्राद्धमधि विचारितवान् । ग्रन्थकाररचितोऽयं श्राद्धकल्पग्रन्थो भूपालगोपालयोर्ग्रन्थादिसमीक्षावशात् तत्प्रदर्शितमार्गानुसारेण प्रवृत्तः ।

---

(६९) पितृभक्ति, पृ० २७ ख

तदेतानि वाक्यानि राज्ञालिखितत्वादनादेयानीति केचित् । तदयुक्तं कामधेनावपि राजनिबन्धवत् शिष्टपरिग्रहात् । संशयस्तर्हि इति चेत् न राजालिखितस्यादर्शनेनाप्युपपत्तेः । न हि यावन्ति स्मृतिवाक्यानि तावन्ति सर्वाण्येव राज्ञा दृष्टानीति प्रमाणमस्ति । न च राजलिखितमेवाद्रियते इत्यपि नियमः रामायणादेरनादरप्रसङ्गात्······ तथेह यत् स्मृतिवचनं महाजनपरिगृहीतं तत् प्रमाणं, स्मृत्यधिकरणन्यायात् ।
नन्वेवं गौडनिबन्धानामपि प्रामाण्यापत्तिः निर्मूलबहुवचनत्वेन शिष्टैरनादृतत्वात् ।

(७०) पितृभक्तिग्रन्थाः निम्नोक्तेषु स्थलेषु उपलभ्यन्ते :—

(क) हरप्रसाद शास्त्री, डेसक्रिपटिभ क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन दि गभर्णमेन्ट कालेक्सन आण्डार दि केयार अफ दि एसियाटिक सोसाइटि, भल्युम ३, पृ० ३९९-४०० ।

(ख) मिथिला क्याटालग, पृ० २८०-२८२ ।

(ग) डेकान कलेज, पृ० १५२ ।

राजेन्द्रलालमित्रमहोदयाः विकानीरक्याटालगाख्यग्रन्थे एकां पुस्तिकामुल्लिखितवान् किन्तु तत्र ग्रन्थकारस्य नाम न प्राप्यते । आदावन्ते च यौ श्लोकौ तौ तु पितृभक्त्यनुरूपौ इति कृत्वा स ग्रन्थः पितृभक्तिः एव नान्यः इति मन्यामहे ।

(७१) मिथिला क्याटालग, पृ० २८२

(७२) „ „ पृ० २८५

केचिद् विद्वांसो मन्यन्ते यदिमौ श्राद्धकल्पपितृभक्तिग्रन्थौ द्वावेव श्रीदत्तकृतौ अभिन्नौ एकात्मानौ वा, अथवा श्राद्धकल्प एव पितृभक्तिग्रन्थनाम्ना परिचित इति (७३)। वयन्तु प्रागेवावोचाम यत् पितृभक्तिग्रन्थः अस्मात् पृथगिति। किं च श्रीदत्तः स्वयमेव स्वकीये पितृभक्तिग्रन्थे क्वचिदेकत्र इदमुक्तवान्—"एतत्तु अस्माभिः छन्दोगश्राद्धकल्पे सविस्तरमालोचितम्" (७४)।

अस्य श्राद्धकल्पस्य परिचयस्तत्कृतसमयप्रदीपग्रन्थेऽपि उपलभ्यते (७५)।

श्राद्धकल्पपुस्तकस्योल्लेखः वाराणसेयसरस्वतीभवनाख्यस्य ग्रन्थागारस्य ग्रन्थ-परिचयात् (तृतीय खण्ड १३१८० एवं च १३७६५ संख्यकौ) मिथिलायाः ग्रन्थपरिचयात् (४५७-४५८ पृ०) अथ च वोम्बेविश्वविद्यालस्य आइ० एस्० देशाइ संगृहीतपुस्तक-परिचयतः (५१ पृ०) उपलभ्यते। सम्प्रति तु अयं ग्रन्थः अस्माभिः सम्पाद्य प्रकाशितः (वाराणसी १९७१)।

प्रागेवोक्तं यत् श्रीदत्तोपाध्यायस्य नाम्ना यौ व्रतसारव्रतपद्धतिग्रन्थौ प्रचलितौ तौ तु समयप्रदीपग्रन्थस्यैव नामान्तरभाजौ। अन्यच्च श्रीदत्तोपाध्यायरचितः अपरोऽपि कश्चिद् ग्रन्थः परिचीयते इति। शुद्धिनिर्णय इति तस्य संज्ञा (७६)। शुद्धिमवलम्ब्यान्ये-ऽपि बहवो ग्रन्था मैथिलनिबन्धृभी रचिताः सन्ति। वस्तुतस्तु इदं तत्त्वं मिथिलायां भूयस्त्वेन जनप्रियतामाप। श्रीदत्तकृतशुद्धिनिर्णयग्रन्थे तावत् जननमरणादिजनिता-शौचात् शुद्ध्युपाया कार्त्स्नेन वर्णिता : (७७)।

श्रीदत्तोपाध्यायस्य समयप्रदीपाभिधो ग्रन्थो हि अत्युत्तमः। यदपि समय-प्रदीपनाम्ना अन्यद् ग्रन्थद्वयमुपलभ्यते तत्तु अस्मदालोच्यसमयनिर्णयविषये नामसादृश्यं विना नान्यत् किमपि साम्यमुपजीव्यते। तत्र प्रथमस्य समयप्रदीपनाम्ना प्रथित-योर्ग्रन्थयोः रचयिता विट्ठलदीक्षितः (७८)। अयन्तु अद्यत्वेऽपि न मुद्रणेन प्रकाशतां

---

(७३) एइच० डि० भेलांकार, क्याटालग अफ म्यानुसक्रिप्टस इन दि आइ० एस० देशाई कालेक्सन इन दि बम्बे इउनिभार्सिटि।

(७४) पितृभक्ति, पृ० १५ ख इति प्रपञ्चितम् अस्माभिश्छन्दोगश्राद्धकल्पे।

(७५) समयप्रदीप, पृ० ४९ क निर्णीतमस्माभिः श्राद्धकल्पे।

(७६) पि० भि० काने, हिष्ट्रि अफ धर्मशास्त्र, भल्युम १, पृ० ७५२।

(७७) शुद्धिनिर्णयपुस्तिकार्थं द्रष्टव्यं—
मिथिला क्याटालग, पृ० ४३३।
पि० भि० काने, हिष्ट्रि अफ धर्मशास्त्र, भल्युम १, पृ० ७५१।

(७८) पि० भि० काने, हिष्ट्रि अफ धर्मशास्त्र, भल्युम १, पृ० ६५९।

नीतः, हस्तलिखितपुस्तिकाकारेण विराजते। द्वितीयस्तु मुद्रितः। हरिहराचार्योऽस्य निबन्धकः। अयमेव स्मार्त्तरघुनन्दनपिता हरिहराचार्यो न वा तत्र महान् सन्देहोऽस्ति। अयं तावत् कश्चित् ज्योतिश्शास्त्रग्रन्थ इति। अस्मिन् ग्रन्थे ज्योतिश्शास्त्रविषयाः सन्ति, ते यथा—चन्द्रशुद्धिः, वामवेधेन चन्द्रशुद्धिः, ताराशुद्धिः, नक्षत्रदोषशान्तिः, नक्षत्रप्रचयाः, नक्षत्राधिदेवता, योगनवांशविचारः, कालाशुद्धिः, सर्वग्रहशुद्धिः, विशेषतो रविशुद्धिः, रविदोषशान्तिः, दग्धास्तिथयः, नन्दाभिसंज्ञकास्तिथयः पापादितिथयः, सिद्धियोगः, कालवेला, वारवेला, माहेन्द्रादियोगाः, क्षेत्राधिपाः, नक्षत्रामृतयोगः, उग्रादिनक्षत्रसंज्ञा, गर्भाधानपुंसवनसीमन्तोन्नयनान्नप्राशनादयः संस्काराः, योटकादिविचारः, सप्तशलाकावेधः, दशयोगभङ्गः, पञ्चशलाकावेधः, सुतहिवुकादियोगः, औषधभक्षणं, वाजिप्रक्रिया, गोयात्रादयः, सामान्यतो देवताप्रतिष्ठा, धान्यच्छेदनाम्बुवाचीगृहप्रवेशाः, योगिनीविचारः, यात्रालग्ननिर्णयः, उषायोगः, नवान्नादयश्च।

ग्रन्थारम्भे वयं पश्यामः —

अनायासेन समयं कर्मणां यो विधित्सति
तदर्थं ज्योतिषः श्लोकान् संचिनोमि यथामति। इति।

तथा—

ज्योतिषग्रन्थकलापाद् वचनान्याकृष्य शिष्यबोधाय।
समयप्रदीपमेतं कुरुते श्रीहरिहराचार्यः (७९) ॥ इति।

ततश्चानुमीयते यत् अस्मदालोच्यसमयप्रदीपग्रन्थेन सार्धं नास्त्यस्य सम्बन्धलेशोऽपि।

साम्प्रतं वयं श्रीदत्तकृतसमयप्रदीपमनु कंचित् परिचयं विधित्सामः। आदौ तावदस्य तथा नामकरणे हेतुः प्रदर्श्यते।

लौकिकानां सर्वेषामेव भावानां यद्यपि नित्येनानित्येन वा कालेन सहाङ्गाङ्गिभावसम्बन्धोऽस्त्येव, तथापि श्रौतस्मार्त्तधर्मकर्मभिः सह कालस्याङ्गाङ्गिभावसम्बन्धो विशेषेणोल्लेखनीयः। शास्त्रविहितकर्मणां साधनेषु अन्यतमं साधनं काल इति ऋषिभिर्निर्णीतम्। उक्तं च—

अकाले चेत् कृतं कर्म काले तस्य पुनः क्रिया।
कालातीतं तु यत् कुर्यादकृतं तद् विनिर्दिशेत् ॥

---

(७९) समयप्रदीप, पृ० १।

कालस्य क्रियाया अधिकरणत्वेऽपि धर्मशास्त्रमीमांसकैः प्राधान्येनाङ्गत्वनिरूपणार्थं कर्मानुष्ठानकर्तृविशेषणत्वेन स गृहीत इति । एतच्च 'शुचिस्तत्कालजीवी कर्म कुर्यादि' त्यादिभिरधिकारबोधकविधिविचारे स्फुटीकृतम् । अस्माच्च कारणात् मीमांसकैर्विद्वभिर्धर्म्यकर्मबोधकविधिवाक्येषु कालवाचकशब्देभ्यो विहिता सप्तमी, न अधिकरणे सप्तमीति सिद्धान्तितम् । कालः कर्त्तुर्विशेषणमिति कृत्वा तत्र विशेषणे तृतीया प्राप्तिरेव स्यात् तदपवादार्थं 'कालभावयोः सप्तमीति' विशेषविधानं कृतम् (८०) । यतश्च सर्वेषां धर्म्यकर्मणां कालोऽपरिहार्यमङ्गमिति विहितमतो हि श्रीदत्तोपाध्यायो निजग्रन्थस्य समयप्रदीप इति नाम चकार इत्येवं सिद्धान्तोऽसङ्गत इति न मन्तव्यम् । अस्मिंस्तु समयप्रदीपग्रन्थे कालविशेषेण विहितानि श्रौतानि स्मार्त्तानि च कर्माणि यद्यपि आलोच्यानि तथाप्यत्र सर्वाणि व्रतान्येव विशेषतः आलोचितानि । इदमभिसन्धाय ग्रन्थकारेण ग्रन्थोपक्रमे "श्रीदत्तेन व्रतादीनां सारमाकृष्य लिख्यते" इति प्रतिज्ञातम् । समयपदस्य आचाररूपोऽर्थः अपि प्रसिद्धः । तदुक्तं—"समयः शपथाचारः………"।

अत्रेदमप्युल्लेख्यं यदस्य ग्रन्थस्य व्रतसारसंज्ञया व्रतप्रदीपनाम्ना वा व्यपदेशोऽस्तीति । व्रतानि व्रतपरिगणनां वादाय अनेके ग्रन्थकाराः स्वस्वग्रन्थे तत्त्वम् आलोचितवन्तः । परन्तु तेषु लक्ष्मीवरो हेमाद्रिश्च समुल्लेख्यसंज्ञौ इति । मत्स्यभविष्यादिपुराणेष्वपि अनेकेषां व्रतानां परिचयः प्रदत्त एव, ते पुनः व्रततत्त्वं वा व्रतलक्षणं वा व्रतविषयकसमीक्षणं वा अवलम्ब्य न प्रावर्त्तिषत । वङ्गीयस्मार्त्तरघुनन्दनेन तु यद् यत् कृतं तत् समयप्रदीपकारोक्त्यपेक्षया अतीव स्वल्पतनु, अन्तरान्तरा च स्वग्रन्थेषु प्रदीपकारस्य मतम् अविकलमुद्धृतवान् । अतोऽनयापि दिशा समयप्रदीपः समधिकमूल्य इति मन्तव्यम् । समयप्रदीपकारस्तावत् न हेमाद्रिवत् नापि कृत्यकल्पतरुकारवत् अनेकशो व्रतानां परिगणनयैव चरितार्थः, परमितिकर्त्तव्यतातत्त्वानि लक्षणाणि विभागांश्च अनुसरन् सर्वथा समीक्षां चक्रे ।

---

(८०) शुचिस्तत्कालजीवी कर्म कुर्यात् अनेनार्षवचनेन कर्त्तुः शुचित्वस्य तत्कालजीवित्वस्य च विशेषणतया प्राप्तेः तत्कालरूपविशेषणतावच्छेदकस्यापि प्राप्तिः । तत्कालपदेन च पञ्चमीषष्ठ्येकादशीप्रभृतयः कालविशेषा एव गृह्यन्ते, त एव विशेषणात्मानः, तच्छब्दस्य शक्तविशेष एवोपस्थितेः । अत एव "शरदि पुष्पन्ति सप्तच्छदाः," 'पञ्चम्यामुपवसेत्" इत्यादिवाक्यानां शाब्दबोधविषयः पञ्चम्युपलक्षिततत्पुरुषीयोपवासः कार्य इत्यादिरूपो भवति । पञ्चम्याम् इति पदस्य पञ्चमीविशिष्टपुरुषीयेत्यर्थः, अतश्च मीमांसकमते कालो विशेषणमिति सिद्धस्यैव । एवं च जटाभिः तापसो ज्ञेयः इत्यादिषु यथा जटोपलक्षितस्तापसो ज्ञानविषय इति बोधो भवति तथा पञ्चम्या परिचायितेन पुरुषेणोपवासः करणीय इत्यायाति ।

वस्तुतस्तु व्रतानुष्ठानं न केवलं भारतान्तर्निहितमेकदेशपातीति मन्तव्यम् । अपि तु पुराकालात् प्रभृति पृथिव्याः प्रदेशान्तरेष्वपि व्रतस्य प्रसिद्धिर्दृश्यते । कालभेदेन देशभेदेन चास्य स्वरूपमनुष्ठानप्रकारो यदि वा भिद्यते तथापि निगूढमस्य मर्म अविच्छिन्नमेवास्ते । तथा हि महाचीनप्रदेशीया वौद्धाः एकाधिकसूत्रमभ्यसितुं व्रतमवलम्बन्ते, प्रतिवारं समाप्त्या सह तन्मालग्रन्थगणनाया अपि व्रतम् अभ्यसन्ति (८१)। कदाचिद् वा ते एकाधिकवत्सरान् तीर्थपर्यटनं व्रतत्वेन गृह्णन्ति। उत वा 'वोधिसत्त्वस्य मूर्तेः पुरतः कियतो दीपान् कियतो वत्सरांश्च व्याप्य दास्याम' इति प्रतिज्ञारूपं व्रतमवलम्बन्ते।(८२)

चीनप्रदेशे गृहीतव्रतपालनाशक्तौ स्वशरीरत्यागवार्त्तापि श्रूयते । किं बहुना केषांचित् सम्प्रदायविशेषाणां प्राणाहुतिः एव व्रतमासीत्। तथा हि व्रतसमाप्त्यनन्तरं ते अनलपाताद् वा उत्तुङ्गगिरिशिखराद् वा ( Tai-shan वा Hua-shan पर्वतात्) आत्मानं पातयित्वा वा स्वदेहं विसृष्टवन्तः। अद्यत्वेऽपि केषुचित् पर्वतेषु इत्थमात्महत्याशिखरस्य प्रसिद्धिरस्ति।

प्राचीनानां हिब्रु जातीयानां मध्येऽपि यद् व्रतप्रचलनमासीत् तस्य तत्त्वं हि उपवासादिकं, भोज्यग्रहणाद्विरतिर्द्राक्षाग्रहणात् उपरतिश्च । एतैरनुमीयते यत् ते व्रतावलम्बिनो आसन्निति। विशेषतश्च गृहीतव्रतमध्ये स्त्रीसंसर्गवर्जनादिकमवश्यकरणीयत्वेन परिगणितमासीत् । काचित् परिणीता रमणी (८३) व्रतं ग्रहीतुं यत्

---

(८१) दे गुट, सेकटेरेयानिजम एण्ड रिलिजियास पार्सिकिउसन इन चायना, १, पृ० २२५।

(८२) एइच डोरे, रिसार्चेस सु ले सुपारस्टिसनस एन चीने, पार्ट १, भल्युम ४, पृ० ३४२।

(८३) होलि वाइवेल, ओल्ड टेष्टामेन्ट, ३०, ६-८ तस्याः स्त्रियः पतिरस्ति चेत् तस्याः प्रतिज्ञाकाले ओष्ठेभ्यो वाङ्निष्क्रमणसमये सा आत्मानं बध्नाति।

तस्या भर्ता इदमश्रौषीत्—श्रवणदिवारभ्य तस्यां शान्ति विदधौ। ततः तस्याः प्रतिज्ञा फलवती तथा च ययैव सा आत्मानं बध्नाति स्म सापि फलप्रसविनी।

किन्तु यस्मिन्नेव दिवसे तस्या भर्त्ता इदमश्रौषीत् यदि तस्मिन्नेव दिने तां प्रतिषेधयति तर्हि पतिनिर्देशानुसारिणी प्रतिज्ञा ओष्टोद्गता वाक् नैव फलं प्रसूते ययैव सा आत्मानं बध्नाति सापि न फलवती। तथा सानुकम्पस्तस्यामीश्वरः And if she had at all an husband, when she vowed, or uttered thought out of her lips, wherewith she bound her soul.

अधिकारिणो भवति तत्र तस्या भर्त्तुरनुज्ञा अपेक्षणीया भवेत्। अविवाहितकन्यापि व्रतग्रहणाय पितुराज्ञाप्रतीक्षार्हा आसीत् (८४)। संक्षेपतः इदमेव वक्तव्यं यत् दुःखकष्ट-मेव व्रतग्रहणस्य हेतु । व्रतोद्यापनावसरे मुक्तिः, धनसम्पदः, स्वास्थ्यमपत्यानि विजयश्च काम्यत्वेनासन् (८५) ।

---

And her husband heard it and held his peace at her in the day that he heard it: then her vows shall stand, and her bonds wherew th she bound her soul shall stand.

But if her h sband disallowed her on the day that he hea"d it; then he shall make her vow which she vowed and that which she uttered with her lips, wherewith she bound her soul, or none effect: and the lord shall forgive her.

(८४) होलि वाइवेल, ओल्ड टेष्टामेन्ट, ३–५

यौवने यदि काचिद् रमणी पित्रालये ईश्वराय प्रतिशृणोति कयाचिद् वा आत्मानं बध्नाति तथा च अस्याः पिता इदमश्रौषीत् ययैव आत्मानं बध्नाति स्म सापि श्रुतिपथ-मागता—स श्रवणदिवारभ्य तस्यां शान्तिं विदधौ ततः तस्याः प्रतिज्ञा फलवती—तथा च ययैव सा आत्मानं बध्नाति स्म सापि फलप्रसविनी ।

किन्तु यस्मिन्नेव दिवसे तस्याः पिता इदमश्रौषीत् तस्मिन्नेव दिने तां प्रतिषेधयति तदा नापि तस्याः काचित् प्रतिज्ञा नैव नियन्त्रितात्मबन्धनं फलं प्रसूते । पिता तां प्रतिषेध-यति इत्यतः सानुग्रहस्तस्यामीश्वरः ।

If a woman also vow a vow unto the Lord, and bind herself by a bond, being in her father's house in her youth.

And her father hear vow, and her bond wherewith she had bound her soul, and her father shall hold his peace at her, then all her vows shall stand, and every bond wherewith she had bound her soul shall stand.

But if her father disallow her on the day that he heareth; not any of her vows, or of her bonds wherewith she hath bound her soul shall stand: and the lord shall forgive her, because her father disallowed her.

(८५) होलि वाइवेल, ओल्ड टेष्टामेन्ट, साम ६६, १३–१५

प्रदग्धेन नैवेद्येन सह अहं भवदालयं गमिष्यामि ।

मम दुरवस्थायां या एव मुखोच्चारिता ओष्ठनिर्गता स्याद् भवते च तां प्रतिज्ञां समर्पयिष्यामि ।

अहं भवते स्निग्धं समृद्धं पशुं, प्रदग्धं नैवेद्यं, सुगन्धं मेषं च प्रदास्ये । अहं भवते गावं छागं च प्रतिश्रृणोमि।

रोमप्रदेशस्य प्रत्नतत्त्वमालोच्यापि व्रतादीनां परिचय उपलभ्यते । तत्रत्य-शिलालिपितो वयमिदमवगच्छामो यत् कस्यचित् कुटुम्बिनो द्वौ भ्रातरौ (Vertulei इत्याख्यौ) निजपैतृकव्रतपालनाय पुरोहितप्राप्यधनस्य Hercules इत्याख्याय देवाय दशमांशं प्रयच्छत इति (८६) ।

इहुदिजातीनाम् इतिहासग्रन्थोऽपि अमीषां तुल्यामेव प्रवृत्तिम् उद्घोषयति । षोडशशतके सुप्रथितनामा ग्रन्थकारः Joseph Qaro तस्य Shulhan Ārukh इत्यभिधेये स्वग्रन्थे प्रथमाध्याये कानि व्रतानि मङ्गलकराणि कानि वा तदन्यथाभूतानि तेषां सुविस्तरेण समीक्षां चकार । खृष्टीयधर्मग्रन्थस्य प्राथमिकान् पञ्चधा मतवादान-नुसृत्य भर्ता वा पिता वा पत्न्या वा कुमार्या दुहितुर्वा व्रतभङ्गं कर्तुमलमासीत् (८७) ।

जार्मानप्रदेशेऽपि इत्थमेव व्रतादिकं प्रचलति । तथा हि कस्याश्चिद् देवतायाः पुरतः वृहत्तरायाः शक्तेः सविधे यथानिर्द्दिष्टकालाभ्यन्तरे व्रतस्य उद्यापन-संकल्पः करणीयत्वेन विहितोऽस्ति । सामान्यतः किमप्युद्दिश्य व्रतग्रहणस्यास्य विधा-नमासीत् । इमानि सर्वाणि व्रतानि जार्मानदेशस्य उत्तरभागे तथा दक्षिणांशे च भूयसीं जनप्रियताम् आवहन्ति स्म । तानि चातीव पवित्राणि अनतिक्रमणीयानीति च अमन्यन्त । गृहीतव्रतभङ्गकारिणं जनं लोका अतीव गर्हयन्ति स्म । कोऽपि न श्रद्दधौ ।

एवं ग्रीसदेशे तथा इंलण्डदेशेऽपि वृतानुष्ठानवार्ता अवगम्यते ।

यद् भवतु, श्रीदत्तोपाध्यायः स्वकीये समयप्रदीपग्रन्थे यथा व्रतस्य लक्षणं तत्त्वमितिकर्तव्यतां वा यथाविभागं विचारितवान्, यथा वा कुशाग्रवुद्ध्या परमतं निरस्य स्वमतं स्थापितवान् तत्तस्यापूर्वविश्लेषणप्रतिभाया अनन्यसामान्यमेधायाश्च निदर्शनम् ।

आदौ तावदसौ वृतस्य इतिकर्तव्यतामनु विचारे प्रवृत्तः ।

अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ।
सूर्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

---

I will go into thy house with burnt offerings : I will pay thee my vows, which my lips have uttered, and my mouth have spoken, when I was in trouble.

I will offer unto thee burnt offerings of tatlings; with the incense of rams; I will offer bullocks with goats.

(८६) कर्पास इन्सक्रिपसनाम ल्याटिनारुम, १।१२७५ ।

(८७) एब्राहाम, जुइस लाइफ इन दि मिडल एजेस, पृ० १०९, ३९२ ।

इति वचनमुपजीव्य व्रतग्रहणपूर्वाह्णे एकाहाररूपं भोजनसंयमं व्यवस्थापितवान् । तत्रापि प्रसङ्गादिदमाक्षिपत् यथा प्रातराहारम् इति वचनोपात्तप्रातःशब्दः केन सह अन्वेतु, यदि अव्यक्तं प्रधानगामिति न्यायात् व्रतमाचरेदिति क्रियया सह तस्यान्वय इत्युच्यते अर्थात् प्रातः संकल्प आचरणीय इति पर्यवस्येत् तर्हि धर्म्यव्रतादेः पुण्यजनकव्रतादेर्वा आरम्भकालः प्रातरिति प्रतीयेत । एवमसौ अन्यदपि आचिक्षेप यत् आहारमिति पदे एकवचनं विवक्षितमविवक्षितं वेति एतदपि चिन्त्यमिति । दृश्यते च प्रायेण उद्देश्यगतम् अर्थात् विधेयान्वितधर्मिविशेषणत्वेन प्राप्तानां पदार्थानां लिङ्ग-संख्यादिकं न विवक्षितं भवति, लौकिकवाक्येऽप्येष नियमः, वैदिकवाक्येऽपि तथास्तीति । तथा हि 'ग्रहं सन्मार्ष्टि' इत्यादिवाक्ये सन्मार्जनं विधेयम्, ग्रहपदमुद्देश्यी-भूतम्, 'दशग्रहा गृह्यन्ते' इति वाक्यान्तरेण तेषां प्राप्तत्वात्, प्राप्तस्य पुनः कथनमनुवाद इत्यनुवादपदार्थत्वात् अतो ग्रहगतमेकवचनं न विवक्षणीयमिति । ग्रहा यज्ञीयपात्र-विशेषाः, सन्मार्जनं हलेन प्रोक्षणमित्यर्थः, ततश्च उद्देश्यग्रहगतमेकत्वं सन्मार्जनस्या-विषयीकृत्य दशग्रहाः सर्वे एव सन्मार्जनीया यथा भवन्ति तथा आहारमभुक्त्वा इत्यत्रापि आहारपदगतम् एकत्वमपि अविवक्षितमाहारस्य रागप्राप्तत्वात् अनूद्यत्वम् । आहारस्य रागतो रुचितो वा प्राप्तौ सर्वेषामेव ऐक्यमत्यात् एतदर्थं विधिवाक्यस्यापेक्ष-णीयता अर्थात् आहारं गृह्णीयात् इति विधिसापेक्षता नास्तीति । ततश्च एकाहारवत् द्वावाहारावपि निवर्तनीयौ स्यातामित्याशङ्कायां समाधत्ते यद्यत्र आहारपदे एकत्वसंख्या अविवक्षिता स्यात् तर्हि आहारपदे एकशेषवृत्तिः कल्पनीया स्यात् अर्थात् आहार-पदस्यावृत्तिः कल्प्येत इति कल्पनागौरवमायाति । यदि पुनरुच्येत अत्र आहारमात्र-निवृत्तिः न एकत्वसंख्याविशिष्टस्य आहारस्येति अर्थात् आहारपदगतद्वितीयाविभक्तेः कर्मत्वमात्रं नैकत्वसंख्या अर्थ इति तदपि न संगच्छते सामान्यत आहारनिवृत्तेर्वि-वक्षितत्वे सर्वेषामेवाहाराणां निवर्त्तनीयत्वापातात्, तच्चासम्भवीति । अतो व्रत-ग्रहणात् पूर्वेऽह्नि किंचित्संख्याविशिष्ट आहारः एव वर्जनीय इति वक्तव्यम् । उपस्थितताया एकत्वसंख्यायाः परित्यागे मानाभावात् एकत्वविशिष्टस्याहारस्य निवृत्तिरेव शास्त्रार्थो मन्तव्यः । इदमत्र द्रष्टव्यं यत् वङ्गीयस्मार्त्तानामन्यतमः प्रधानस्मार्त्तो रघुनन्दनोऽपि निरुक्तवचनमुपजीव्य समं सिद्धान्तं कुर्वन्नपि प्रदीप-कारस्य चरमोक्तां युक्तिम् अर्थात् अविशेषिताहारनिवृत्तिविषयकं सिद्धान्तं केवलमनु-ससार, न पुनरेकशेषवादविषयिणीं प्राथमिकीं युक्तिमिति । इदमत्रावधेयम् आहार-मितिपदे एकशेषवृत्त्याश्रयणे आहारश्च इति द्वित्वात् आहारशब्दोत्तरं द्विवचनं प्रसज्येत, अत एव वङ्गीयस्मार्तेन स पक्षो न युक्तिसह इति कृत्वा उपेक्षित इति ।

समयप्रदीपकारस्य मते अभुक्त्वा आहारमित्यस्य एकभक्तं कृत्वेत्यर्थः। केचिदत्र एकभक्तस्य कालविशेषानुल्लेखात् दिवा वा रात्रौ वा एकभक्तं निर्दिशन्ति। श्रीदत्तस्तु अपरेषु बहुव्रतेषु एकभक्ताचारस्योल्लेखात् शिष्टाचाराच्च एकभक्तमेव व्रतमात्रस्याङ्गम्, अन्यथा नानाविधकल्पनागौरवं स्यात् सदाचारनिरासश्च प्रसज्येतेत्याह। अत्र चेदमनुग्राहकम्—

सायमाद्यन्त्ययोरह्नोः सायं प्रातश्च मध्यमे।
धर्म्योपवासे कुर्वीत नैव भक्तचतुष्टयम् ॥

एतद्वचनेनापि धर्म्योपवासादिव्रतस्य पूर्वापरदिनयोरेकभक्तमर्थात् दिवा एकं भोजनं कर्त्तव्यत्वेन विहितम्। 'अभुक्त्वा प्रातराहारम्' इति पूर्वोक्तवचनस्य तात्पर्यनिर्णयप्रसङ्गात् श्रीदत्तेनोक्तम् यत् प्रातर्व्रतमाचरेत् व्रते प्रातरेव संकल्पः करणीय इति सामान्यविधावपि 'व्रतं निशामुखे ग्राह्यम्' इत्यादिविशेषवचनोपात्तसायंकालीन संकल्पविधेः प्रायश्चित्तात्मकद्वादशवार्षिकादिव्रतविषयकत्वमिति। केचित् पुनः सर्वेष्वेव व्रतेषु व्रतवासरपूर्वेद्युः सायं संकल्पकर्तव्यतां वदन्ति। तैस्तु अभुक्त्वा प्रातराहारमितिवचनबोधित प्रातः संकल्पेतिकर्तव्यताया गतिः अन्यथा क्रियते। तथा हि निरुक्तवचनस्थप्रातःपदस्य स्नात्वेतिपदेन सहान्वयः अर्थात् प्रातःस्नात्वा उपवासादिकं व्रतं कुर्यादिति। अत एव तेषां मते प्रातःसंकल्पाचरणेतिकर्तव्यताया न तात्पर्यविषयत्वमस्य वचनस्य। परमिदं समयप्रदीपकारस्यानभिप्रेतम्। तथा हि अव्यक्तं प्रधानगामीति न्यायात् सन्दिग्धपदस्य क्रियया सहान्वयस्य उचितत्वात् अत्र व्रतसंकल्पानुष्ठानस्यैव इतिकर्तव्यतारूपेण प्रधानक्रियात्वात्। अतः प्रातःपदम् आचरणक्रिययैव सहान्वितमिति। एतच्च सन्निकर्षवशात् स्नात्वेति स्नानक्रियया सहान्वयार्हमिति न वाच्यं 'प्रातः संकल्पयेद् विद्वान् उपवासव्रतादिषु' इत्यादिवचनेषु सुस्पष्टमेव प्रातःसंकल्पाचरणस्य विहितत्वात् असन्दिग्धवचनस्यास्य सन्दिग्धैरपरैर्वचनैः सहैकवाक्यतायां वितर्कानवताराच्च। इतिकर्तव्यतानिर्देशोपक्रमे संकल्पस्य कर्तव्यतायामालोचनापदवीमवतीर्णायां ग्रन्थकारः किमिदं व्रतं नाम इति प्रश्नपूर्वकं तस्य स्वरूपं लक्षणं चाश्रित्य विचारमवतारितवान्। प्रसङ्गतश्च प्राचीननिबन्धकाराणां मतम् अपि उद्धृत्य तेषां निरासार्थं प्रववृते। प्राञ्चः केचिदाचार्याः उपवासादिव्रतम् इत्यस्य पुण्यजनकधर्मोपवासादेरेव व्रतार्थत्वमाहुः। अत्रापि समयप्रदीपकारमते विप्रतिषेधः,तथा हि व्रतलक्षणमेतदनुपपन्नम् इति अनुगमकस्य विशेषरूपेण परिचायकधर्मपदस्यानुल्लेखनीयत्वात् आदिपदस्य विशेषपदार्थपरत्वाभावाच्च। अन्ये तु केचन संकल्पमात्रं व्रतमिति स्वीकुर्वन्ति,

तदपि न युक्तिसहं संकल्पमात्रस्य तथात्वे लौकिकसंकल्पादौ अर्थात् प्रतिज्ञातेषु लौकिकविषयेष्वतिव्याप्तेः इति श्रीदत्तः। अपरे पुनराचार्याः अवश्यपालनीयसंकल्पं व्रतमुक्तवन्तः। एतदपि समीचीनत्वेन न प्रतिभाति व्रतस्य पालनीयतायां सुस्पष्ट-प्रमाणाभावात् अर्थात् व्रतं पालनीयमित्यादिरूपविधिवाक्याभावात्। शास्त्रविहित-संकल्पो व्रतमित्यपि कस्यचिल्लक्षणं समयप्रदीपकारो न सम्यक्तया अनुमोदते अन्योन्याश्रयदोषापत्तेः। तथा हि शास्त्रविधानसापेक्षं व्रतज्ञानं, व्रतज्ञानसापेक्षं च व्रतत्वेन शास्त्रविधानमिति परस्परज्ञानसापेक्षत्वम्। अपरोऽपि कश्चिदाचार्य आह 'व्रतत्वेन शास्त्रे परिगणितं कर्म व्रतमिति'। किन्तु अत्रापि तथैव दोषापातः। एते सर्वे स्वपक्षसमर्थनाय माधवाचार्यप्रदर्शितमन्त्रलक्षणं दृष्टान्तत्वेन उदाहरन्ति। माधवाचार्यास्तु मन्त्रस्य स्वरूपनिरूपणप्रसङ्गे वितर्कमुखेन सामान्यतो मन्त्रोऽयमिति समाख्यानात् मन्त्र इत्युररीकुर्वन्ति। इदमत्र आकूतं, शास्त्रकारा यं यं मन्त्र इत्या-चख्युस्ते सर्वे मन्त्राः परिगण्यन्ते इति। अत्रापि तथा व्रतानाम इत्यनेन तेषां युक्तिप्रपञ्चं खण्डितवान्। यत्र वृतस्वरूपमेव न परिचायितं तत्र कथं नाम वृतत्वेन परिगणितं सम्भवदुक्तिकमिति तत्तात्पर्यम्। अथैवं विकल्पसमूहान् निरस्य ग्रन्थकृत् स्वमतसिद्धं वृतस्वरूपं व्यक्तीचकार। प्रसङ्गतस्तेन प्रागेवोक्तं स्वकर्तव्यविषयो नियतसंकल्पो वृतमिति। यद्धि शास्त्रवाक्येन इदं कर्त्तव्यमिति कर्त्तव्यत्वरूपेणोद्घोषितं तद्विषयकविहितकालविशेषोल्लेखपुरःसरः संकल्प्य इदं करिष्ये इतीच्छारूपो वृतमिति वृतलक्षणं तन्मते पर्यवसितम्। परन्तु अत्रापि वादिनामाक्षेपो वरीवर्त्ति। तथा हि वृतस्य संकल्परूपत्वे वृतं करिष्ये इत्यादिसंकल्पसूचकाभिलापवाक्यान्तर्गतस्य वृतपदस्य क्रियापदस्य च द्वयोरर्थतः संकल्परूपत्वात् पौनरुक्त्यापत्तिरित्याशङ्का स्यात्। अत्र ग्रन्थकार एवं समाधत्ते यथा दानं दद्यादित्युक्तौ दानपदस्य दाधातोश्चार्थैक्येऽपि मिलितभावेन अर्थान्तरत्वं स्वीक्रियते तथा अत्रापि तथैवोपपत्तिः सम्भवति। दृश्यते च एकः द्वौ वहवः इत्यादिषु प्रकृतिप्रत्यययोर्मिलितभावेनैकार्थता। कात्यायन-श्रौतसूत्रेऽपि 'सम्भेदे नान्यतरवैयर्थ्य' मित्यत्र समानार्थकयोः प्रातिपदिकयोः प्रत्यययोर्वा परस्परं सम्भूयैकार्थकत्वमिति प्रतिपादयति, मिलितार्थे विशिष्टार्थे वा दृढ़ता परि-लक्ष्यते। तेन च कस्यापि वैयर्थ्यमाशङ्कितं स्यात्। अनयैव रीत्या करोतीत्यादौ कृधात्वर्थस्य कृतेराख्यातार्थस्यापि कृतेरेकत्वेऽपि सम्भूय कृत्योः कृत्याश्रयत्वार्थरूपैकार्थे पर्यवसानं भवति। इदमत्रावधेयं दानं दद्यादित्यत्र दानपदस्य दीयत इति कर्मव्युत्-पत्त्या दीयमानपदार्थपरत्वग्रहणे सति नास्ति पूर्वोक्तदोषावकाशः, एवं सति प्रकृतस्थलेऽपि वृतं कुर्यादित्यत्र वृतपदेन वृतविषयीभूतस्य उपवासादेर्ग्रहणे अर्थात् स्वकर्त्तव्यविषयस्य बोधने न कोऽपि दोषप्रसङ्गः। किं च एतदपि वक्तुं शक्यं यद् वृतं

कुर्यात् व्रतं गृह्णीयाद् वा इत्यत्र आरम्भ एव उक्तः तथा सति संकल्पवाक्यं व्रतस्यारम्भ इति अर्थात् अनुष्ठानस्योपक्रम एव व्रतारम्भ इति। इत्थं चात्र व्रतपदम् अनुष्ठेयकर्म-बोधकमिति तात्पर्यकत्वे उपपत्तिः सम्भवति। श्रीदत्ताभिप्रेतव्रतलक्षणे नियतपदोपादानात् यावज्जीवकर्त्तव्यदर्शपौर्णमासयागे व्रतलक्षणस्यातिव्याप्तिः। अन्यथा (नियतपदानुपादाने) यावज्जीवकर्त्तव्यरूपेण विहिते अनियतकालकर्त्तव्ये दर्शपौर्णमासयागस्यापि व्रते अन्तर्भावः स्यात्। अस्माच्च कारणात् माससाध्ये दर्शपौर्णमासयागे नियत-कालस्य निर्देशात् व्रतान्तर्भावो निर्बाध एव भवति। व्रतलक्षणनिरूपणप्रसङ्गे केचन प्राचीना निबन्धकाराः संकल्पो व्रतमित्यनुक्त्वा संकल्पपूर्वककर्त्तव्यमुपवासादिकमेव व्रतम् अभिहितवन्तः। अयं ग्रन्थकारस्तु केवलमुपवासस्य व्रतरूपत्वे अननुगमदोष इति प्रागेवोल्लिखितवान्। संकल्पपूर्वकत्वविशेषणोपादाने तु नास्ति तद्दोषप्रसक्तिः इति। अस्मिंश्च मते व्रते उपवासादिकं मुख्यं संकल्पस्तु तदङ्गमवधार्यते। परन्तु समय-प्रदीपकारस्तदपि नानुमोदते, तत्कारणोल्लेखप्रसङ्गे तेनोक्तं यत् संकल्पविशिष्टमुपवा-सादिकं कर्म व्रतमुच्यते चेत् तर्हि तादृशव्रतस्वरूपज्ञानात् पूर्वं विशेषणीभूतसंकल्प-पदार्थस्य ज्ञानमपेक्षणीयं स्यात्, तथा च तत्र पूर्वपरिज्ञातसंकल्पस्य व्रतत्वेन ग्रहणे लाघवं स्यात्। अतः समयप्रदीपकारः केवलं संकल्पमेव व्रतरूपत्वेन गृहीतवान्। वङ्गदेशीयस्मृतिनिबन्धकारो रघुनन्दनभट्टाचार्यस्तु निरुक्तयुक्तिमपोह्य संकल्पविशिष्ट-मुपवासादिकमेव व्रतमुक्तवान्। अयं तस्य अभिप्रायः—स्वकर्त्तव्यविषयको नियतसंकल्पो व्रतमिति श्रीदत्तोपाध्यायकृते लक्षणेऽपि स्वकर्त्तव्यविषयत्वरूपेणोपस्थितम् उपवासादिकर्मापि संकल्परूपव्रतविशेषणत्वेन गृहीतं भवति। अत्रापि नागृहीतविशेषणाबुद्धिर्विशेष्ये चोपजायते इति न्यायात् यत् उपवासादिकर्मज्ञानं पूर्वमपेक्षितं भवति ततश्च श्रीदत्तोपाध्यायकृते स्वकर्त्तव्योपवासादिविषयसंकल्पो व्रतमिति लक्षणेऽपि पूर्वप्रदर्शितगौरवापत्तिदोषो जागरूकः, तेनायं दोष उभयोरपि पक्षयोः समानः इति कृत्वा गौरवलाघवविचाराय न कोऽपि पक्षः प्रभवति। उक्तं च—

यत्रोभयोः समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे।

संकल्पो व्रतमित्येतावन्मात्रोक्तौ यद् एकाधिकाः दोषाः समुद्भवन्ति तत् स्मार्त्तो रघुनन्दनः एकादशीतत्त्वे विवृतवान्। तन्मते

एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्र उदाहृतः॥

इति याज्ञवल्क्यीयवचने एकभक्तनक्तायाचितभोजनोपवासादिकर्मणां व्रत-शब्दसमपर्यायिककृच्छ्रशब्देनोल्लेखात् न संकल्पमात्रस्य वृतत्वं वक्तुं शक्यते, तथात्वे उक्तवचनोक्तोपवासादिपदवाच्यैः उपवासादिकर्मभिः सह कृच्छ्रपादप्रयोगो विरुध्येत। अन्यच्च संकल्पस्य वृतत्वे अयमपरोऽपि महान् दोषः प्रसज्येत सोऽपि रघुनन्दनेन प्रदर्शितः। तथा च भगवान् मनुराह—

संकल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः।
वृतनियमधर्माश्च सर्वे संकल्पजाः स्मृताः॥ इति।

अत्र मनुवचने वृतं संकल्पजन्यमुक्तम्—अतो वृतसंकल्पयोः अभेदेनोक्तिः न संगच्छते। अतो वै कारणात् संकल्पविशिष्टमुपवासादिकमेंव वृतमिति निर्द्धारितम्। इदमपरमपि विवेच्यम्। शब्दस्य शक्तिग्रहे स्वरूपार्थबोधे वा व्याकरणादिवत् अभिधानमपि विलक्षणं प्रमाणं भवति। तथा हि वृतशब्दार्थनिरूपणावसरे अभि-धानकृदमरसिंहो वर्णितवान् 'नियमो वृतमस्त्री तच्चोपवासादिपुण्यकम्'। अनेन वृत-शब्दस्य उपवासादिकर्मसु सङ्केतो वैशद्येन प्रतीयते। अतोऽपि कारणात् संकल्पमात्रस्य वृतरूपत्वाभिधानात् संकल्पविशिष्टतत्तत्कर्मणामेव वृतरूपत्वं वरमिति रघुनन्दनेन प्रतिपादितम्। अतश्च ऋषयो वृतारम्भे संकल्पस्य कर्त्तव्यतामाहुः। तथा हि—

वृतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे।
आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥ इति।

समयप्रदीपकारमतेऽपि सङ्कल्पादिनामारब्धवृते अशौचादौ समुत्पन्नेऽपि 'न वृतिनां वृते' इत्यादिविष्णुवचनेन प्रतिप्रसवसत्त्वात् पूजाद्यङ्गकर्माणि उपवासादि-प्रधानकर्माणि च अधिकारवशान्न निवर्त्तन्ते। अत एव श्रीदत्तेनोक्तं यथा अतो वृताङ्गदेवपूजाद्यनुष्ठानमपि न विरुद्धमिति। आरब्धवृतकालमध्ये वृतिन्या नार्या रजोदोषे समुपस्थिते किं कर्त्तव्यमिति शङ्कायामुक्तं यथा—स्त्रिया तु आरब्धवृतमध्ये रजोयोगे पूजादिकमन्येन कारयितव्यमिति। तथापि ऋतुमती रमणी कायिकमु-पवासादिकं कर्म स्वयमेव कुर्यात् पूजादिकं तु अन्येन ब्राह्मणेन निर्वाहयेत्। अनेन प्रसङ्गेन 'न वृतिनां वृते' इति विष्णुवचनेन आरब्धवृतकारिण्या एवाशौचप्रतिप्रसवो विहितः। एतवता प्रबन्धेन इदमपि अवगम्यते यत् संकल्पो वृतं च नार्थान्तर-मिति, संकल्पो हि वृतस्य उपक्रममात्रम्। संकल्पात् परमपि वृताङ्गानां बहूनां कर्मणां कर्त्तव्यता विहिता अस्ति।

शास्त्रविहितकर्ममात्रे एव संकल्पस्य कर्त्तव्यताविधानात् 'मासपक्षतिथीनां च' इत्यादिवचने मासविशेषः, पक्षविशेषः, तिथिविशेषः, सम्भवस्थले निमित्तविशेषोऽपि संकल्पाङ्गत्वेन विधीयते। शास्त्रविहितेष सर्वेष्वेव कर्मसु विशेषेण काम्यकर्मसु यथाविधि संकल्पस्याचरणे अनुष्ठितकर्मणां सम्पूर्णं फलं नोत्पद्यते। इदमन्यत्रोल्लिखितमास्ते। यथा हि

> संकल्पेन विना राजन् यत् किंचित् क्रियते नरैः।
> फलं चाल्पाल्पकं तस्य धर्मस्यार्धक्षयो भवेत्॥

इति। अत्र प्रयुक्तमल्पाल्पकपदं पादशः अर्थे प्रयुक्तम्, संकल्पव्यतिरेकेण अनुष्ठितं कर्म अर्धफलाय भवति। एतेन इदमेव ज्ञायते यत् संकल्पो व्रतादीनां कर्मणामङ्गविशेषमात्रम्। अङ्गं हि द्विविधं भवति। एकं स्वरूपनिर्वाहकमन्यच्च फलोपधायकम्। तत्र प्रथमस्यानाचरणे कर्मणोऽसिद्धिर्न भवति केवलं फलाल्पतामात्रमिति। अत्र फलं चाल्पाल्पकमित्यादिवचनेन अवगम्यते यत् संकल्पं विना अपि अर्धफलम् उत्पद्यत इति। अत एव कर्मणः सर्वथा नासिद्धिः। यदि संकल्पस्य व्रतत्वमुच्यते तर्हि संकल्पाभावे कर्मणः सर्वथा असिद्धिरापद्येत।

नारायणोपाध्यायप्रमुखाः प्राचीना निबन्धकारा अपि संकल्पं व्रतमाहुः। तथापि श्रीदत्तोपाध्यायवत् तदंशे नियतत्वविशेषणमप्रदाय दीर्घकालानुपालनीयत्वविशेषणं प्रयुक्तवन्तः इति। कर्मसामान्ये एव 'व्रतोपवासस्नानादौ घटिकैका यदा भवेदि'त्यादिवचनेन मुहूर्तव्यापिन्यामेव तिथौ कर्मानुष्ठानं विहितम् (८८)। फलतस्तु श्रीदत्तनारायणोपाध्याययोः मतवैषम्यं नोपलभ्यते। श्रीदत्तोपाध्यायः कर्त्तव्यविषयक इति संकल्पविशेषणं प्रयुक्तवान्। मन्यामहे नारायणोपाध्यायस्तत्र अनुपालनीयेति विशेषणं नियुयोज। तात्पर्यमनुसृत्य विचारे तु उभयोर्मतयोरैकार्थ्यं वक्तुं शक्यते। परन्तु श्रीदत्तः क्वचिदेकत्रांशे संकल्पपूर्वककर्त्तव्योपवासादि व्रतमिति कस्यचित् प्राचीनस्मार्त्तस्य मतमुद्धृत्य तत्राननुगमदोषनिरासार्थं संकल्पपूर्वकत्वेनैवानुगमादिति समाहितवान्। एवन्तूपवासादीनामेव प्राधान्यं संकल्पश्च तत्राङ्गमित्याहुरिति प्राचीनविशेषस्य मतमुल्लिख्य 'नागृहीतविशेषणे'ति न्यायेन तदपि खण्डितवान्। अनेन च व्यापारेण इदमेवावगम्यते यत् श्रीदत्ततोऽपि प्राचीनतरः कश्चित् निबन्धकारः श्रीदत्त-

---

(८८) अत्र नारायणोपाध्यायादीनां मते दीर्घकालपदेन तदधिककालव्यापितया। तिथेरेव संग्रह इति मन्यामहे। एवं सति मुहूर्तकालं व्याप्य करणीयं पूजादिकं विना दीर्घकालव्यापकोपवासादिकमेव व्रतपदेन ग्राह्यं भवितुं नार्हति।

वत् संकल्पं व्रतमनुक्त्वा संकल्पं व्रताङ्गत्वेन अङ्गीकृत्य तत्तदुपवासादिकमेव व्रतमित्य-भिहितवान्। अर्वाचीनो निबन्धकारो रघुनन्दनो मतमिदं स्वीकुर्वन् कतिपयाभि-र्विशिष्टयुक्तिभिः कथं समर्थनं कृतवानित्येतत् प्रागेवोट्टङ्कितम्।

संकल्पो हि भावस्वरूपे कर्मणि मयेदं कर्त्तव्यमिति ज्ञानविशेषरूपः, अभावात्मके तु यथा ब्रह्मचारिपालनीये 'नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचने'त्यादौ उदीयमाना-दित्यदर्शनप्रतिषेधे कर्त्तव्यताबोधनेऽपि फलतस्तु इदं मया करणीयमित्यादिज्ञानविशेष एव पर्यवस्यति। अतश्चाभिधानिकैरुक्तं 'संकल्पः कर्ममानसमि'ति। संकल्पपूर्वक-मारब्धे कर्मणि भ्रमप्रमादादिवशात् अननुष्ठिते—

पूर्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा चैव जायते॥

इत्यादिभिर्वचनैर्बोधितप्रायश्चित्तं श्रुतम्। अत्र तावत् सकृद् भ्रमप्रमादादिना आरब्धव्रतस्यापालनेऽपि प्रायश्चित्ते प्रतिप्रसवो दृश्यते। तथा हि'सर्वभूतभयं व्याधि'रित्य-त्रापि समयप्रदीपकारेणोल्लिखितमेतदिति। यद् भवतु, व्रतस्य संकल्परूपत्वे उपवासादि-कर्मरूपत्वे च नव्यप्राचीनयोर्विशेषतः श्रीदत्तरघुनन्दनयोरन्तरा मतभेदसत्त्वेऽपि संकल्प-पूर्वकमारब्धे व्रते इतिकर्त्तव्यतायां न मतभेदविशेषः परिलक्ष्यते।

आदौ तावत् व्रतारम्भपूर्वदिने एकाहाररूपं भोजनसंयममनुष्ठाय परेद्यवि तु पूर्वाह्णादिषु विहितकालेषु मासपक्षतिथिविशेषाणां निमित्तानां च तत्तद्व्रतनिर्दिष्टफल-विशेषकामनायाश्चोल्लेखपूर्वकमभिलापवाक्यमुच्चर्य यथायथं व्रतानुष्ठानपद्धतिसम्मत-मङ्गदेवतापूजनं प्रधानदेवतार्चनं च विधाय व्रतविशेषोक्तानि तानि तानि प्रधानकर्माण्य-नुष्ठेयानि। केषुचिद् व्रतेषु पूजनाद्यनन्तरं देवतोद्देशेन प्रदत्तद्रव्यविशेषाणां भक्षणं द्रव्यान्तरस्याभक्षणं च प्रधानकर्मत्वेन परिगणितमास्ते। तत्रेदं दृष्टान्तरूपेण विधान-सप्तमीव्रतमुदाहर्तुं शक्यते। तत्र 'अर्काग्रं शुचि गोमयम्' इत्यादिवचनबोधितानां द्रव्य-विशेषाणामेवाभ्यवहारः प्रधानकर्मत्वेन निर्धारितः। कस्मिंश्चित् व्रते उपवासो नक्तभोजनमेकभक्तं वा मुख्यत्वेन परिगणितम्। यथा हि शिवरात्रिजन्माष्टमी-श्रीरामनवमीव्रतमेकादशीप्रभृतीनि च; तत्र तत्र उपवासप्रधानकर्मेति निर्धारितम्।

प्रसङ्गादिदमपि वक्तव्यं यद् व्रते प्रधानकर्मणः अननुष्ठानादेव व्रतभङ्गजनित-दोष आपतेत् तत् प्रायश्चित्तं च कर्त्तव्यमस्ति। अङ्गकर्मणामननुष्ठाने न तथा दोषः प्राप्नोति अर्थात् व्रतभङ्गजनितदोषो न समुदेति किन्तु सामान्यतः प्रत्यवायस्यैवोत्पत्तिः इति।

आरब्धवृतं दीर्घकालकर्त्तव्यं चेत् तदन्तरा कस्यचिद् वृतस्य प्रधानकर्मणो लोपे सति वृतभङ्गजनितदोषप्रतिप्रसवे देवलवचनानुसारेण श्रीदत्तप्रभृतिभिः प्राचीनैः रघुनन्दनादिभिश्च नव्यैर्निबन्धृभिः ऐकमत्येनोक्तं यद् व्याघ्रादिभिः श्वापदैर्जनितभयाद् वृतभङ्गे रोगविशेषेण समुत्पादिते वा प्रमादकृते वा,अथवा गुरोर्निर्देशेन जनिते तस्मिन् न कस्यचित् प्रायश्चित्तस्यावश्यकर्त्तव्यतेति, परन्तु सकृत्कृतवृतभङ्गस्थले एव एष प्रतिप्रसवो ग्राह्यः। यदि तु एवं पुनः पुनः संघटते वृतभङ्गोऽथवा मोहकृतः सकृदपि स्यात् तर्हि 'उपवासत्रयं कुयात् कुर्याद्वा केशमुण्डनम्' इत्यादिवचनविहितम् उपवासत्रयं शिरोवपनं च प्रायश्चित्तम् अनुष्ठेयम्। परन्तु अत्र नव्यनिबन्धकारो रघुनन्दन आह यत् 'प्रायश्चित्तमिदं कृत्वा पुनरेव वृती भवेत्' अर्थात् विहितमुपवासत्रयसहकृतमुण्डनादिरूपं प्रायश्चित्तं विधाय वृतभङ्गवर्षात् परवर्षे नववृतमारम्भनीयमिति। केचित् पुनः एतद्वचनमन्यथा व्याचख्युः। ते हि वदन्ति यत् प्रायश्चित्तानुष्ठानेन भग्नवृतस्य फलसिद्धिर्भवति पुनरेव भवेदित्यंशस्य पुनरिदं तात्पर्यम्, अत्र पुनःशब्दोपादानात् तस्य च सजातीयद्वितीयत्वबोधकत्वात् द्वितीयवृतानुष्ठानमात्रं करणीयं नारम्भकमिति। अन्ये तु केचिदेवमाहुः यत् प्रायश्चित्तेन वृतभङ्गजनितदोषमात्रस्य परिहारो भवति प्रायश्चित्तस्य पापक्षयमात्रजनकत्वात् पुण्यजनने तस्य सामर्थ्याभावात्। अतः एवंविधे क्षेत्रे नष्टवृतस्य फललाभार्थं पुनरादितः प्रभृति सर्वाङ्गोपसंहारेण वृतान्यनुष्ठेयानि। अत्र श्रीदत्तोपाध्यायो विशेषं कमप्यनुल्लिख्यापि पूर्वोक्तस्य 'सर्वभूतभयं व्याधि' रित्यादिवचनस्य व्याख्याप्रसङ्गेन व्याधिशब्दस्य सामान्यतो रोगार्थमनुल्लिख्य आरब्धव्रतानुष्ठानजनितक्लेशात् उद्भूतरोगविशेषपरत्वं व्याख्यातवान्। मोहजनितव्रतभङ्गस्थले 'पूर्वं व्रतं गृहीत्वे' त्यादिमुनिवचने काममोहितेति कर्त्तृविशेषणोपादानात् श्रीदत्तेनोच्यते यत् काममोहितेत्यभिधानात् तदसम्भवे त्यागो न दोषाय अर्थात् विधिसङ्गतेन अलङ्घनीयकारणेन व्रतभङ्गे सति दोषा न भवतीति परन्तु काममोहितस्थले अर्थात् अभिसन्धिपूर्वकमोहग्रस्तेन व्रतभङ्गे कृते दोषः स्यादेव। अत्रापि च अर्वाचीना निबन्धकारास्तूष्णीमेवासन्।

दीर्घकालीनव्रतारम्भात् परं समाप्तेः पूर्वमेव यदि व्रतिनः शरीरपातः स्यात् तथापि 'यो यदर्थं चरेद्धर्ममि'त्यादिना एकादशीतत्त्वोद्धृतेनाङ्गिरोवचनेन वृतकारिणो जनस्य कार्त्स्न्यतः फलप्राप्तिरवगम्यते। अत्रापि रघुनन्दनमतमेव सुस्पष्टम्। श्रीदत्तस्तूष्णीमेवासीत्।

उपवासप्रधाने वृते अहोरात्रावच्छिन्नभोजनाभावात्मकोपवासप्रधानेऽपि अकरणसंभाव्यमानदोषनिवृत्तिपूर्वकगुणसहकृतवासरूपा क्रियापि उपवासस्याङ्गत्वेन भविष्यपुराणीयवचनेऽप्युक्ता।

तथा हि—

उपावृत्तस्य दोषेभ्यो यस्य वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः॥

अत्र सर्वभोगविवर्जितेति विशेषणेन अपरैः भोगैः सह आहाराभाव उपवासस्य प्रधानाङ्गत्वेन गृहीत इति। अस्य मते उपोषितस्य सर्वभूते दया, क्षमा, असूयावर्जनम्, शुचिता इत्येवमादयोऽष्टौ गुणा गौतमोक्ताः परिगृहीताः। सर्वभोगवर्जनविधौ श्रीदत्तेन शास्त्राननुमतगीतनृत्यादिसुखभोगरहित इत्युक्त्वा विहितभोगस्य सर्वभोगविवर्जने प्रतिप्रसवोऽपि स्वीकृतः। यथा चन्दनादिगन्धद्रव्याणि, अलङ्काराः, सुवस्त्राणि, पुष्पमाल्यानि, अनुलेपनानि, दन्तधावनम्, अञ्जनं च उपवासदिने न दोषायेति। शातातपवचनेऽप्यत्र दृश्यते यथा—

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्॥ इति।

उपवासे दन्तधावनकर्मणि 'दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलमि'त्यनेन दन्तेन काष्ठसंयोगो निषिध्यते, परन्तु श्रीदत्तेनात्र पत्रादिना दन्तधावनानुज्ञानाद् विरोधं परिजहार इत्युक्त्वा पत्रादिना दन्तधावनमनुमोदितम्। रघुनन्दनस्तु उपवासदिने दन्तधावननिषेधस्य प्रतिप्रसवं नाङ्गीचकारेति। तस्यायमभिप्रायः—'मुखे पर्युषिते नित्यं भवत्यप्रयतो नर' इत्यनेन सामान्यतः प्राप्तं दन्तधावनम् 'उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्' इति विशेषवचनेन उपवासदिने पुनस्तस्य विहितत्वस्वीकारे निषेधवचनस्य निर्विषयत्वापत्ते वैयर्थमेव स्यात्, अतः उपवासे न इत्यत्र पृथक्पदद्वयमनभ्युपेत्य तृतीयाविभक्त्यन्तमेकमेव उपवासेन इति पदमभ्युपेयमिति। एवं सत्युपवासदिने दन्तधावने कृते दोष आपतति इत्येव विधिवाक्यार्थः। अत्र सत्यपि कस्मिंश्चिन् मतभेदे उपवासदिने अत्यये चाम्बुपाने च नोपवासः प्रणश्यती'ति वचनमूलकमापदि जलपानं न दोषावह इति। एतच्च प्राचीननव्ययोर्न विरुद्धम्। 'सर्वभोगविवर्जितः' 'अस्य वासो गुणैः सह' इत्यंशतः प्रतिपादितं गुणसहकृतवासपूर्वकभोगवर्जनम् अथवा भोगवर्जनपूर्वको गुणसहकृतवास एव उपवासपदार्थ इति यस्य कस्यचिदर्थस्य ग्रहणात् परस्परं भिन्नप्रतिवेशिकमिति प्रतिभाति। उपवासो हि न केवलं भोजननिवृत्तिरूपः अभावपदार्थः, परन्तु भावाङ्गकनिवृत्तिरुपवास इत्यभ्युपगन्तव्यम्। तथा सति 'निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते' इति वचनं 'विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके' इत्यादिवचनानि चोपजीव्य एकादश्यादिकालमात्रावच्छिन्नभोजनाभावरूपः अर्थः न

ग्राह्यः, यतो हि भावरूपमङ्गं वर्जयित्वा केवले निवृत्तिरूपे अभावपदार्थे उपवासपदस्य शक्तिग्रहे निषेधः कालमात्रके इत्यस्य विषयता आयाति। वस्तुतस्तु उपवासो न तथा, शौचाद्यष्टगुणसहकृतस्य भोजननिवृत्तिरूपस्याभावस्यैव तत्पदार्थत्वात्, अतश्च वेधखण्डतिथिविशिष्टाहोरात्रावच्छिन्नकाले तादृशमहर्दिवं वा भोजनाभावस्य उपवास-पदार्थत्वेन परिभाषितत्वम् इति। उपवासदिने उपवासासमर्थनात्—

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत् पञ्चगव्यं यदिवाथ वायुः
प्रशस्तमत्रोत्तरमुत्तरं च ॥

इत्यादिवचनैः फलमूलजलदुग्धग्रहणमेकान्ततोऽसमर्थस्य रात्रौ हविष्यान्नभोजन-मपिशास्त्रविहितमिति कृत्वा रघुनन्दनादयः अर्वाचीना निबन्धकारा अभ्युपगतवन्तः। वृतसामान्ये च—

अष्टौ तान्यवृतघ्नानि आपो मूलं फलं पयः।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

इत्येतद्वचनमूलकं जलं शालूककन्दादिमूलं फलं दुग्धं घृतमौषधं ब्राह्मणकाम्यया गुरोराज्ञया वा अनिषिद्धभोजनं च असमर्थपक्षे विहितमस्ति। अत्र श्रीदत्तोपाध्यायस्य न कोऽपि निर्देशो दृश्यते। सामान्येन प्राचीना नवीनाश्च स्मार्तसम्प्रदायाः सर्वे एव नित्यं नैमित्तिकं काम्यमिति त्रिधा वृतं व्यभजन्त। तत्र यदकरणे प्रत्यवायः श्रुतौ अभिहितः तन्नित्यत्वेन परिगणितम्—यथा जन्माष्टमीवृतम्, एकादशीवृतम्, शिवरात्रिवृतमित्यादि। एवमादिषु वृतेषु उपवास एव प्रधानं कर्म निर्दिष्टम्. कीर्त्तिताश्च तदकरणे अर्थात् उपवासदिने अन्नादिग्रहणे विविधा दोषाः। यथा एकादशीवृतं सर्वेषां नित्यम् अतः तद्वृतदिने अन्नादौ अभ्यवहृते पूर्वैः पितृपुरुषैः सह भोक्तुर्निरयवासो भवेत्। उक्तं च शास्त्रे यथा—

मद्यपानात् मुनिश्रेष्ठ पातैव नरकं वृजेत्।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति ॥ इति।

एकादश्यामन्नग्रहणे एवं बहवो दोषा वर्णिताः। येषां वृतानामननुष्ठाने न किमपि पापमुत्पद्यते अनुष्ठाने च इह परत्र वा फलविशेषोद्भूतिः तानि वृतानि काम्यान्यभिधीयन्ते यथा भविष्यपुराणादौ वर्णितानि सावित्रीवृतमनन्तचतुर्दशीवृतम् इत्यादीनि। एतानि

काम्यव्रतानीत्युक्तानि। काममेतान्यपि व्रतानि संकल्पपूर्वकमारब्धानि प्रतिष्ठापूर्वकपर्यन्तं नित्यत्वे परिगणितानि भवन्ति, परन्तु आरम्भात् परम् एषामपालने प्रत्यवायजनकता-साम्येऽपि आरम्भात् पूर्वमकरणे पापजनकता न श्रूयते इत्येव विशेषः। अत एवाद्यत्वे एवंविधानि व्रतानि विरलानुष्ठानानीति। यद्यपि नैमित्तिकव्रतानां स्वातन्त्र्येण उल्लेखो दृश्यते तथापि एतान्येव नित्यकाम्यानि व्रतानि कालविशेषे अर्थात् मासविशेषं तिथि-विशेषमाश्रित्य विहितानीत्यतो नैमित्तिकसंज्ञया संज्ञितानीति बोद्धव्यम्। अतो नैमित्ति-कव्रतशब्देन नित्यनैमित्तिकानि काम्यनैमित्तिकानि च व्रतानि व्यपदिश्यन्ते। सर्वेषामेव काम्यव्रतानां यथाकालं प्रतिष्ठा करणीया। अकृतायां प्रतिष्ठायां तावत् कालं व्रतं न समाप्तिमेति। अस्माच्च कारणात् तदन्तरालकाले अननुष्ठानेन व्रते लुप्ते व्रतस्य फलमंशतोऽपि कर्त्रा न लभ्यत इति। सत्यमेतत् यदारब्धव्रतस्य यथाविध्यनुष्ठायिनः समाप्तेः पूर्वं मरणे व्रतोक्तफलप्राप्तिः सम्पूर्णा भवतीति प्रागेवोक्तम्।

व्रतप्रतिष्ठाकार्यं शुक्रास्तादिजनिते अशुद्धकालमध्ये अर्थात् शुक्रग्रहस्य उदयास्तप्रभृतिभिः कारणे जनिते शास्त्रनिर्दिष्टे निषिद्धकाले अननुष्ठेयम्। अत्र नव्यप्राचीनयोर्नास्ति काचिद् विप्रतिपत्तिः, परन्तु व्रतप्रतिष्ठायां विहितकालमा-श्रित्य दृश्यते तावत् मतवैषम्यम्। तथा हि केचिद् वदन्ति अन्तिमे व्रतवत्सरे अर्थात् यस्य व्रतस्य यावन्तो वत्सरा निमित्ताकालत्वेन विहिताः, तस्य समाप्ति-वत्सरे प्रतिष्ठायां कर्त्तव्यायां कालस्य शुद्ध्यशुद्धिविचारो नावश्यकः। अन्यमते अशुद्धकाले कदाचिदपि व्रतप्रतिष्ठा नानुष्ठेया। परमत्र विषये प्राचीननव्यसम्प्रदाया अभिन्नमतयः यत् समाप्तिवत्सरे अकृतव्रतप्रतिष्ठा तत्परवर्त्तिनि वत्सरे तन्मासीय-तत्पक्षीयतत्तिथौ शुद्धकाले एव करणीया, न कदापि अशुद्धकाले सा कर्त्तव्या। एवं व्रतारम्भेऽपि निमित्तीभूतकालस्य शुद्धता विशेषतोऽपेक्षणीयेति। अशुद्धकाले व्रतारम्भनिषेधे नास्ति किमपि मतवैषम्यम्। एकादशीजन्माष्टमीप्रभृतिषु नित्येषु व्रतेषु नास्ति आरम्भकालस्य शुद्धताप्रश्नः। 'अष्टाब्दादधिको मर्त्यो ह्यपूर्णाशी-तिवत्सरः' इत्यादिवचनानुसारेण एकादशीव्रतम् अष्टाब्दाधिकवर्षीयस्य ऊनाशी-तिवर्षवयसो मनुष्यमात्रस्य करणीयमिति। अत्रापि कालस्य शुद्ध्यशुद्धीविचार्यैव व्रतारम्भस्य नावश्यकता। काम्येषु पुनः सावित्रीचतुर्दश्यादिव्रतानामेवारम्भप्रति-ष्ठयोः कालाकालविचारोऽपेक्षित इति। समयप्रदीपकारमते एकादशीव्रतानुष्ठाने अन्यदेकं वैशिष्ट्यं सिद्धान्तितम् यथा सूर्योदयानन्तरं दशमीविद्धा एकादशी न कथमपि उपवस्तव्या। तदेतन्नव्यसम्प्रदायस्य सम्भूयवादित्वमिति। तेषां मते—

एकादशीमुपवसेद् द्वादशीमथवा पुनः ।
विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

इत्यादिवचनबलात् न कास्वपि अवस्थासु उदयानन्तरं दशमीविद्धाया-मेकादश्याम् उपवासो विधेय इति । किं बहुना, यत्रोदयानन्तरं दशमी किंचित्-कालव्यापिनी तत एकादशीपातः ततश्च रात्रिशेषे द्वादश्यारम्भः तत्र त्र्यहस्पर्शदिने तादृशीम् एकादशीं विहाय तत्परदिने केवलायामपि द्वादश्याम् उपवासो विधेयः, परन्तु अत्र विषये श्रीदत्तोपाध्यायो मतभेदं पुष्णातीति प्रागेवोक्तम्। तेषां मते परदिने उपवासयोग्याया एकादश्या लाभे दशमीविद्धा सा नोपोष्येति सत्यं, किन्तु परदिने एकादश्या अप्राप्तौ अर्थात् पूर्णायां द्वादश्यां पूर्वदिने दशमीविद्धा-यामपि एकादश्याम् उपवासोऽनुष्ठेयः इति ।

'एकादशीमुपवसेद् द्वादशीमथवा पुनः' इत्यादिवचने यद्यपि द्वादश्यामुपवासो विहितस्तदपि एकादश्याः स्वल्पकालव्यापित्वे द्वादश्यास्तु अधिककालव्यापने सा द्वादशी उपवस्तव्येति बोध्यम्, नह्येतत् द्वादशीवेधरहितायां केवलायां द्वादश्याम् उपवासविधायकम्, अथवा वरमेतत् द्वादशीव्रताख्यमपरमेकं व्रतं ग्रहणीयं, न त्वेका-दशीव्रतमिति एष एव समयप्रदीपकारस्य स्वरसः। अत्र विषये स हि 'लङ्घयेद् दशमीयुता'इत्यादिवचनेषु एतादृशी दशमीविद्धैकादशी उपवासयोग्येति प्रमाणत्वेन गृहीतवान् । रघुनन्दनप्रमुखा नव्या निबन्धकारास्तु एतादृशस्थले दशमीपदेन अरुणो-दयकाले दशमीविद्धा एकादशी उपोष्या इति तात्पर्यं विवृतवन्तः । रघुनन्दनो 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः' इत्यादिवचनैः सहैकवाक्यतामाश्रित्य सर्वत्रैव दशमीविद्धायामेकादश्याम् उपवासबोधकवचनेषु अरुणोदयविद्धैकादशीपरत्वमाह । केवलायां द्वादश्याम् एकादश्युपवासविधाने कर्त्तव्ये सति द्वादशीपदे लक्षणाङ्गीकारः प्रसज्येत । एकादशीयुक्तायां द्वादश्यामुपवासविधाने स्वीकृते तु एकादश्युपलक्षितायां द्वादश्यामुपलक्षणविधया एकादश्या उपवासनिमित्तत्वे लाघवं स्यात् । एतादृशमुप-लक्षणविधया तिथेः विशेषणत्वं न केवलमत्रैव, परन्तु जन्माष्टमीव्रते शिवरात्रादिष्वपि प्राच्यानां नवीनानां च स्मार्त्तानामैकमत्येन अनुमोदनम्। अत एव एकादश्युपवासे एकादशीपदेन शुद्धायां द्वादश्यां लक्षणान्यभ्युपगम्य समयप्रदीपकारसम्मतसिद्धाया-मेकादशीयुक्तायां द्वादश्यामुपवासस्य कर्त्तव्यता नासमीचीनेति प्रतिभाति । स हि केवलद्वादश्याम् उपवासविधायकं वचनं द्वादशीव्रतविषयकमित्युक्त्वा पृथगेवैकादशी-व्रतात् द्वादशीव्रतं निरनैषीत् । श्रवणद्वादश्याम् अपि तादृश उपवासो नव्यनिबन्धकारैः स्वीकृतः इति नादृष्टचरमेतत् ।

समयप्रदीपग्रन्थे आलोच्यविषयानधिकृत्य संक्षेपतस्त्रयः परिच्छेदाः अध्याया वा सन्ति। तेषु तृतीयोऽन्तिमो वा परिच्छेदोऽतीवलघुशरीरः, प्रथमौ द्वौ परिच्छेदौ तदपेक्ष्य विस्तृतावयवौ सप्रयोजनकौ च।

प्रथमपरिच्छेदे तावत् उपक्रमभागे व्रतलक्षणं, तत्स्वरूपनिर्णयः, तत्प्रसङ्गेन विप्रतिपत्तिवादखण्डनं, व्रतस्येतिकर्त्तव्यता एवमन्येऽपि विषया नैपुण्येन विस्तरेण च आलोचिताः। वयमपि निरुक्तया समीक्षया व्रतादिषु श्रीदत्तोपाध्यायानां स्वरसास्वरसौ उपवर्ण्य प्रसङ्गतश्च रघुनन्दनस्य मतमसम्मतं च उद्धृत्य उभयोः मतवैषम्यं मतैक्यं च विशदीकर्तुं प्रयतितवन्तः।

प्रथमपरिच्छेदस्य परिशिष्टे भागे विविधानि व्रतस्वरूपाणि आलोचितानि। सामान्यतो भविष्यमत्स्यवराहदेवीवामनस्कन्दपुराणेभ्यः महाभारताच्च वचनान्युद्धृत्य तेषां व्रतानां स्वरूपाणि समीक्षितानि। स्थानविशेषेषु समयप्रदीपकारः समुद्धृतपौराणादिकरचनानां केषांचिदंशानां व्याख्यानम् अपि कृतवान्। उपरिष्टात् तेषां व्रतानां परिचयो दत्तः (८६)।

अविघ्नव्रतम्—फाल्गुन्यां शुक्लायां चतुर्थ्यां नक्तभोजनं प्रधानं कर्म, सौवर्णगणेशमूर्तिदानं तु विशेषतः फलदायकम्। आषाढशुक्लचतुर्थ्यां तु केवलं सौवर्णगणेशमूर्तिदानमेव विधेयम्, नक्तव्रतं न करणीयम्।

विनायकव्रतम्-अत्र नक्तव्रतानुष्ठानं ब्राह्मणाय तिलतण्डुलदानं च स्वयं तिलतण्डुलभोजनं च विशेषफलदायकम्।

सूर्यव्रतम्-अत्र रविवासरे नक्तव्रतं करणीयम्। इदमेकदिनसमाप्यमथवा संवत्सरं यावत् प्रति रविवासरमाचरणीयम्। यावज्जीवं वा एतत् करणीयत्वेन विहितमस्ति। रविसंक्रमणदिने रविवासरपाते आदित्यहृदयमन्त्रं पठित्वा नक्तव्रताचरणे विशेषफलश्रुति र्दृश्यते। किं च तद्दिने पायसभोजनपूर्वकं रात्रिकाले अनावृतायां भूमौ शयनं प्रशस्तम्। आदित्यहृदयमन्त्रपाठे ततोऽपि विशेषफलश्रुति वर्णिता।

रविदिने हस्तानक्षत्रयोगे उत्तरफल्गुनीनक्षत्रयोगे वा तत्र सूर्यभट्टारकपूजा, अर्कपुष्पस्य दानं, तद्भोजनं च बहुविधानां रोगाणां निवर्त्तकमिति वर्णितम्।

---

(८६) श्रीदत्तोपाध्यायपूर्वकालीनेषु कतिपयेषु ग्रन्थेषु तथा पराचीनेषु अपि एकाधिकनिबन्धेषु विविधानां व्रतानां परिचयप्रदर्शनी प्रदत्ता। वङ्गेषु आधिक्येन प्रचलितेषु रघुनन्दनस्य एकादशीतत्त्वतिथितत्त्वादिषु निबन्धग्रन्थेष्वपि अनेकेषां व्रतानामवगम उपलभ्यते। श्रीदत्तधृतानामशेषाणां व्रतानां मध्ये रघुनन्दनः स्वीयपृथक्पृथङ्निबन्धेषु यान्युल्लिखितवान् आकरग्रन्थेषु तानि प्रदर्शितानि सन्ति।

शुक्लायां सप्तम्यां यदि रविवारयोगः स्यात् तदा विजयासप्तमीति विजया-योगो वा समुद्घोष्यते। तत्र स्नानं, दानं, होमश्च महापातकघ्नानि इति कथ्यते। तत्पूर्वाह्ने एकाहारादिसंयमं विधाय तद्दिने उपवासो विशेषफलदायक इति।

अस्यां सप्तम्यां तिथौ सूर्यमुद्दिश्य रक्तकरवीरपुष्पदाने च समधिकं फलं श्रूयते। प्रसङ्गात् भविष्यपुराणीयवचनेन विजयधूपनिर्माणकार्यमपि वर्णितम्। शुक्लायां सप्तम्यां यदि संक्रमणं स्यात् तर्हि महाविजयायोगो भवति, तत्र स्नानदानहोमैः सूर्यस्य प्रीतिर्भवति, तत्कर्त्तुश्च मृत्योः परं सूर्यलोकप्राप्ति र्जायत इति।

भानुव्रतम्—अत्र संवत्सरं यावत् प्रतिसप्तमीतिथि नक्तव्रतं कृत्वा पयस्वि-न्या धेनोर्दाने सूर्यलोकप्राप्तिः भवति।

सौरव्रतम्—अत्र संवत्सरं यावत् प्रतिसप्तमीतिथि उपोषितेन वत्सरान्ते यथाशक्ति घटेन सह गोदक्षिणा देया।

आरोग्यव्रतम्—मुख्यचान्द्रमाघशुक्लसप्तम्यामारभ्य प्रति सप्तमीम् उपोष्य सं-वत्सरं यावत् सूर्यपूजा करणीया। सौरमाघे वैशाखे कार्त्तिके च प्रातःस्नानेन फलविशेषो भवति।

शिवव्रतम्—चान्द्रमार्गशीर्षस्य कृष्णाष्टम्यां नक्तव्रतमाचरतो महादेवस्यार्चना विशेषफलाय भवति। इदं तावत् एवंविधिना पौषादिक्रमेण द्वादशसु मासेषु अष्टम्यां वर्षसमाप्तिपर्यन्तमनुष्ठेयम्।

सुगतिव्रतम्—प्रत्यष्टमि नक्तव्रतमाचरतो धेनुदाने इन्द्रलोकप्राप्ति र्भवेत्।

रौद्रव्रतम्—माघस्य कृष्णचतुर्दश्यामारभ्य संवत्सरं यावत् सर्वासु कृष्णचतुर्दशीषु नक्तव्रताचरणं महाफलदायकम्।

देवव्रतम्—संवत्सरमनुष्ठाय नक्तव्रतं सौवर्णचक्रत्रिशूलाभ्यां सह ब्राह्मणाय वस्त्रान्वितगवीदाने शिवलोकः प्राप्यते।

रुद्रव्रतम्—कार्त्तिक्यां शुक्लतृतीयायामारभ्य प्रतिमासीयशुक्लासु तृतीयासु गोमूत्रेण सह यवं भक्षयित्वा नक्तव्रतानुष्ठातुर्वत्सरान्ते गोदानं गौरीलोकप्रापकं स्यात्।

शैवव्रतम्—कार्त्तिक्यां पौर्णमास्यां वृषोत्सर्गमनुष्ठाय नक्तव्रते कृते शिवलोक-गमनं भवति।

### अथ नानादेवव्रतानि

ब्रह्मव्रतम्—ब्राह्मणाय सुवर्णनिर्मितब्रह्ममूर्त्तिदाने ब्रह्मलोको लभ्यते।

शिखिव्रतम्—वर्षादिषु चतुर्षु ऋतुषु शिखिव्रतमग्निलोकप्रापकम्।

अग्निव्रतम्—अत्र उपोष्य सवाहनरथदाने राजाधिराजपदलाभः फलम् ।

इन्द्रव्रतम्-अप्रावृते देशे शयानेन वर्षाकाले पयस्विधेनुदानं पुण्यजनकम् ।

वारुणव्रतम्—रात्रौ जलमध्युषितेन प्रभाते गोदाने वरुणलोको गम्यते ।

सोमव्रतम्—सर्वासु कृष्णद्वितीयासु चन्द्रमुद्दिश्य लवणयुक्तं ताम्रपात्रं दत्वा वत्सरान्ते गोदाने कृते सोमलोकगमनं फलम् ।

कामव्रतम्—पुष्यानक्षत्रयुक्तायां शुक्लत्रयोदश्यां नक्तव्रतपूर्वकं काञ्चनदाने विष्णुपुरे अवस्थितिः शोकनाशश्च फलम् ।

धर्मव्रतम्-फाल्गुनस्य शुक्लायां त्रयोदश्यामारभ्य संवत्सरं यावत् नक्तभोजने बहुविधपापक्षयः फलम् ।

नागव्रतम्—श्रावणस्य शुक्लायां पञ्चम्यां बहुविधैरुपचारैः सर्पपूजायां कृतायां सर्पभयनिवृत्तिर्भवति ।

भाद्रकृष्णपञ्चमी—इयमेवालेख्यपञ्चमीत्यभिधीयते । कृष्णवर्णैरुपचारद्रव्यैः सर्पेषु पूजितेषु सप्तमपुरुषावधि सर्पभयं निवर्त्तते ।

नागमित्रपञ्चमी-अस्मिन् दिने भोजने कट्वम्लं परित्यज्य दुग्धेन सर्पस्वपने सर्पैः सह मैत्री संजायते ।

## देवीव्रतानि

शौर्यव्रतम्—आश्विनस्य शुक्लनवम्यां दुर्गादेवीपूजा । सप्तम्याम् आरम्भः, अष्टमीनवम्योरुपवासः, अत्र नानाफलानि श्रूयन्ते । इत्थं सर्वासु शुक्लनवमीषु उपवासरूपं संवत्सरव्यापि व्रतमिदं करणीयम् ।

वीरव्रतम्—पूर्ववद् नवम्यामारभ्य नववत्सरान् यावदिदं व्रतं कर्तव्यम् । व्रतिना पिष्टकं भक्षणीयम् । अपरस्यां नवम्यामारभ्य यावज्जीवनं कर्त्तव्यम् ।

अस्मिन् व्रते अग्निपक्वद्रव्यभक्षणं वर्जनीयम् । प्रसङ्गेन मार्गशीर्षमासस्य शुक्लतृतीयायामारभ्य नानादेवतानां पूजाविधानम् उपवासनक्तव्रतप्रभृतिभिश्चतुष्प्रकारा व्रतकथा च समुल्लिखितम् ।

कुन्दचतुर्थीव्रतम्—माघमासस्य शुक्लायां चतुर्थ्यामारभ्य उपोष्य कुन्दवृक्षस्य पुष्पपत्रफलादिदानं विशेषेण फलजनकम् ।

गौरीव्रतम्—चैत्रमासे दधिघृतक्षीरेक्षुवर्जनपूर्वकं ब्राह्मणदम्पतीः अर्चयित्वा ताभ्यां सूक्ष्मवस्त्रादिदाने गौरीप्रीतिः लभ्यते ।

सौभाग्यव्रतम्—फाल्गुनमासस्य शुक्लतृतीयातः प्रभृति आरभ्य संवत्सरं यावत् शुक्लतृतीयातिथौ लवणवर्जनम्, ब्राह्मणदम्पतिपूजनं च विधाय वत्सरान्ते सोपस्करगृहशय्यादानं विशेषेण फलदायकम्।

लक्ष्मीव्रतम्—पञ्चम्यां तिथौ उपोष्य लक्ष्मीं सम्पूज्य वत्सरान्ते ब्राह्मणाय सौवर्णकलसदाने समृद्धिर्वर्धते ।

सारस्वतव्रतम्—सायं मौनी भूत्वा वत्सरान्ते घृतपूर्णकुम्भं वस्त्रयुग्मं प्रस्थ-परिमितान् तिलांश्च ब्राह्मणाय दद्यात्, एतेन विद्यालाभो भवति।

प्रीतिव्रतम्—पौर्णमास्याममावास्यां च एकभक्ताचरणे पुण्यलोको गम्यते । मुख्यचान्द्रं कार्त्तिकमासं व्याप्य प्रत्यहमेकभक्ते आचरिते अश्वमेधफलसमफलं जायते।

माघे मासि एकभक्तेन मनोज्ञपत्नीलाभः, वैशाखे तथाचरणे धनं, लौकिकं श्रेष्ठपदं च लभ्यते, एवं कार्त्तिके मासि सायम् एकभोजनेन नक्तव्रतेन वा वीरत्वं कीर्त्तिश्च लभ्यते। इत्थं संवत्सरे एकाहारेण अतिवाहिते अतिरात्रनामधेययज्ञस्य फलं प्राप्यते। एतत् सर्वमेव प्रीतिव्रतनाम्ना व्यपदिश्यते।

प्रभाव्रतम्—यावज्जीवमेकभक्ताचरणेनेन्द्रलोकप्राप्तिर्भवति । यावज्जीवं प्रतिमासं तिथिविशेषं निमित्तीकृत्य एकैकोपवासाचरणे सद्विद्या लभ्यते। प्रतिमासं त्रिरात्रोपवासेन कुबेरलोकगमनं भवति। पक्षमेकं व्याप्य उपोष्य ब्राह्मणाय कपिलधेनु-द्वयदानेन ब्रह्मलोको गम्यते ।

ब्रह्मव्रतम्—मासं व्याप्य प्रतिदिनमुपोष्य ब्राह्मणाय धेनुं ददतोविष्णुलोक-प्राप्तिर्भवति ।

नीलव्रतम्—सौवर्णं नीलपद्मं शर्करां च पात्रेण सह ब्राह्मणाय दत्वा यद्येकान्तरितनक्तव्रतमाचर्य्य वत्सरात् परं वृषदक्षिणा दीयते तदा विष्णुलोको गम्यते।

प्रथमपरिच्छेद इव द्वितीयेऽप्यस्य ग्रन्थस्य परिच्छेदे कामं तादृशान्येव व्रतान्या-लोचितानि, परन्तु अस्ति कश्चिद् विशेषः । अस्मिन् द्वितीयेऽध्याये यथेष्टं कियन्ति व्रतान्याभिधाय—

मीनादिस्थो रविर्येषामारम्भः प्रथमक्षणे।
भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृताः ॥

इत्यादिवचनबोधितचैत्रादिमासक्रमेण कर्त्तव्यानि कार्याणि विहितानि । तानि च कृष्णप्रतिपदादिपूर्णिमान्तगौणचान्द्रमासानुसारेण लिखितानि। वयमतः परं मासविशेषेषु करणीयव्रतादीनां यथाक्रमं परिचयं निघण्टुं वा संक्षेपेण प्रकाशयामः।

चैत्रमासे—शुक्लायां पञ्चम्यां विहिता लक्ष्मीपूजा श्रीपञ्चमीनाम्ना अभिहिता। शुक्लाष्टम्यां पुनर्वसुनक्षत्रयुक्ते काले अशोककलिकापानमशोकाष्टमीसंज्ञया संज्ञितम्। सितचतुर्दश्यां शिवपूजा दमनभञ्जीति प्रसिद्धा। तस्यां कर्पूरकुङ्कमादिदाने विशेषफल-श्रुतिर्दृश्यते। अस्यामेव तिथौ चित्रानक्षत्रयोगे तत्काले विचित्रवस्त्रदाने कृते सौभाग्यं समुदेति, पितृतर्पणेऽपि विशिष्टफलश्रुतिरस्ति।

वैशाखमासे—शुक्लायां तृतीयायां विष्णुपूजा अक्षयतृतीयेति भणिता। अस्यामेव तिथौ यवैर्होमः, ब्राह्मणाय यवदानम् इत्येवमादि श्रूयते, फलविशेषोऽपि वर्णितः। यद्यस्यां तृतीयायां रोहिणीनक्षत्रयोगः स्यात् तदा घटोत्सर्गेण नानाविध-द्रव्यदानेन च विशेषफलं जन्यते।

शुक्लायां सप्तम्यां गङ्गापूजा विहिता, पौर्णमास्यां च तिलदानं, तिलैर्होमः, तिलैः पूजा च इत्यादि षट्तिलाचरणं विहितम्। एषा पौर्णमासी तिथिर्यदि सौरे वैशाखे निपतति तर्हि तदा निम्बपत्रद्वयेन मसूरद्विदलभक्षणं सर्पभयनिवारकम्।

ज्यैष्ठमासे—शुक्लायां चतुर्थ्यां सौभाग्यकामनया स्त्रीभिरुमापूजा कर्त्तव्या। शुक्ला दशमी दशहरेति, तस्यां गङ्गास्नानं गङ्गापूजा च दशविधपापक्षयं कुरुतः। अस्यां तिथौ हस्तानक्षत्रयोगे मङ्गलवारपाते च विशिष्टं फलं श्रूयते।

पौर्णमास्यां तिलदानस्य विधिरुक्तः। तत्र ज्येष्ठानक्षत्रयोगे छत्रोपानहदाने विशिष्टफलं श्रूयते। यदि इयं सौरे ज्यैष्ठे निपतति तर्हि सर्पभयनिवारणाय शिरीषपुष्पवीजं भक्षणीयमिति विधिः।

आषाढ़े मासि-कृष्णाष्टम्यां गन्धपुष्पगीतवाद्यादिभिः सह गणेशपूजा कर्त्तव्या। शुक्लायां सप्तम्यां सूर्यमुद्दिश्य उपवास एव प्रधानं कर्म, रथचक्रचिह्निते मण्डले नानाविधैरुपकरणैः सूर्यपूजनं नित्यं कर्म।

शुक्लायामेकादश्यां हरिशयनैकादश्यभिधायाम् उपवासाः प्रधानम्, एतद्व्रतं पञ्चभिस्तिथिभिः साध्यम्। तथा हि प्रथमदिने एकादश्यां विविधैरुपकरणैः लक्ष्मीक्रोडशयितस्य विष्णोः पूजा, द्वितीयदिने द्वादश्यां पुनरपि विष्णुपूजनं, तृतीय-दिवसे त्रयोदश्यां नृत्यगीतवाद्यप्रभृतिभिर्विष्णोराराधनम्, चतुर्थाहे चतुर्दश्यामुपवासः, पञ्चमदिने च पौर्णमास्यां तिथौ श्रीहरेः पूजनम्, इयं पौर्णमासी तिथिः सौराषाढे पतिता चेत् तत्र तण्डुलप्रक्षालनवारिणा सह शिरीषमूलपानं सर्पभयनिर्वर्त्तकम्।

श्रावणे मासि—कृष्णा पञ्चमी नागपञ्चमीति प्रसिद्धा, तत्तिथौ सर्पभयनिवारण-कामनया मनसादेव्याः पूजनवार्त्ता प्रसिद्धैव। शुक्लायां पञ्चम्यां श्रवणानक्षत्रयोगे

वाजसनेयशाखाध्येतॄणां यजुर्विदां ब्राह्मणानां उपाकरणाख्यं वैदिकं कर्म विहितम्। तद्दिने श्रवणानक्षत्रयुक्तायां श्रावण्यां शुक्लपञ्चम्यां वस्त्रयुग्माच्छादितसभोज्यसजलधेनुदानात् स्वर्गलोकप्राप्तिः फलं गदितम्।

भाद्रे मासि–कृष्णाष्टमी श्रीकृष्णस्य जन्मतिथिः, तस्यां जन्माष्टमीव्रतं विहितम्। अत्र उपवासो मुख्यः, विविधैः उपकरणैः श्रीकृष्णस्य पूजनम्. दशविधाः संस्काराश्च विहिताः। तद्दिने रात्रिशेषे नवमीतिथिपाते रक्तमाल्यधारिण्य एकाधिकाः स्त्रियः नदीतीरं गत्वा विविधैरुत्सवैः कालमतिवाहयेयुः। स्वयं स्नात्वा नानादेवताश्च स्नपयेयुः। ततो गृहमागत्य परेद्यवि यवान्नं भुञ्जीरन्। अत्र पुष्यानक्षत्रयोगे सामगा ब्राह्मणा उत्सर्गनामकं वैदिकं कर्म आचरेयुः।

शुक्लायां चतुर्थ्यां चन्द्रदर्शनं निषिद्धम्। शुक्लायां पुष्यनक्षत्रयोगे अनन्तादिनागानां दुग्धेन स्नपनं पूजा च विहितम्।

शुक्लायां षष्ठीतिथौ पुत्रपत्नीसहितेन इन्द्रपूजा विशेषभावेन शस्यवृद्धेः कारणम्। अस्यां तिथौ पूर्वभाद्रपदनक्षत्रयोगे तत्र गोदाने विशिष्टं फलं श्रूयते। भाद्रीयशुक्लपक्षे प्रतिदिनमेव इन्द्रपूजनं विशेषफलप्रदम्।

सौरे भाद्रमासि–अस्मिन् सौरे भाद्रे मासि मुनिः अगस्त्यः उदेति। एतन्मासीयशेषदिनत्रये अगस्त्यमुनिम् उद्दिश्य अर्घ्यदानं विहितम्। तत्पूजा तु अङ्गम्। अर्घ्यदानविधिः तावत् कर्त्ता दक्षिणाभिमुख उपविश्य अर्घ्यं दद्यात्, एतेन सह अगस्त्यपत्न्यै लोपामुद्रायै अर्घ्यदानं पूजा च विहितम् अस्ति।

आश्विने मासि–असितपञ्चमीतः प्रभृति अमावस्यां यावत् प्रतिदिनं पितृपूजा अर्थात् श्राद्धं कर्त्तव्यम्। तत्र मघानक्षत्रयुक्तत्रयोदश्यां विशेषभावेन श्राद्धाचरणं विहितम्। अत्र पुत्रवान् गृही पिण्डदानरहितं श्राद्धं विदधीत। अस्मिन् पक्षे (अश्वयुक् कृष्णपक्षे) चतुर्दश्यां तिथौ शस्त्रहतानां पितॄणां श्राद्धं काम्यं कर्म। आत्मघातिनः श्राद्धं शास्त्रनिषिद्धमपि अस्मिन् पक्षे तत् विशेषवचनेन विहितम्।

अस्मिन् मासे कृष्णपक्षीयपञ्चदशतिथिषु पञ्चदशश्राद्धानि करणीयानि इत्यपि कल्पान्तरमस्ति, तत्रोत्तरोत्तरम् अन्ये अपि त्रयः कल्पा निर्दिष्टाः, एतेषु कल्पेषु श्राद्धकरणासामर्थ्ये दीपान्वितायाम् अमावास्यायाम् अर्थात् गौणकार्त्तिकमासस्य अमावास्यायां श्राद्धं विहितम्, अयं तावत् पश्चिमः कल्पः।

आश्विनशुक्लपक्षे स्वातीनक्षत्रान्वितदिने उच्चैःश्रवःप्रभृतीनामश्वानां पूजा नियमपालनं च विहितम्। एतन्मासीयशुक्लाष्टम्यां देव्या दुर्गायाः अर्चनमपि विशेषभावेन निर्दिष्टम्। इयमष्टमी देव्या आविर्भावतिथिरिति अभिहिता। महा-

नवम्यामपि देव्याः पूजा आथर्वणोक्तं ज्योतिश्शास्त्रोक्तं च विविधक्रियानुष्ठानमपि दृश्यते। श्रवणानक्षत्रयुक्तायां नवम्यां कृत्रिमे दारुमयगृहे कुक्कुटं छागं च संरक्षेत्, अथ अग्निसंयोगेन तस्मिन् दह्यमाने सति फलविशेषलाभो भवति। आश्विनीयपौर्णमास्यां विविधरालेख्यैश्च गृहद्वारं भूषयित्वा अग्निचन्द्रस्कन्दवरुणविनायकादीनां देवताविशेषाणां विविधैफलकामनया पूजाविशेषा विहिताः। तत्र गोमान् सुरभिं, छागवान् अग्निं, मेषस्वामी वरुणं, अनेकेषां हस्तिनां स्वामी गणेशं पूजयेत्। इत्थमधिकारिभेदेन पूजाभेदा विहिताः। न केवलं तथा, नव्यैर्निबन्धकारैः प्रदर्शिता श्रीदेव्याः देवराजस्यापि पूजा, अक्षद्यूतक्रीडावार्त्तापि अत्र वर्णिता वर्त्तते। यदीयं पौर्णमासी अश्विनीनक्षत्रयुक्ता स्यात् तर्हि तद्दिने ब्राह्मणेभ्यो घृतपूर्णसौवर्णपात्रदानेन तेजस्वितामर्जयितुं शक्यते। सर्वमाश्विनमासं घृतदानेन दाता रूपवान् भवितुमर्हति। गोदुग्धादिना ब्राह्मणभोजनम् आरोग्यलाभहेतुर्भवति।

गोणे कार्त्तिके मासि–अमावस्यायां दीपदानस्य लक्ष्मीदेव्याः पूजनस्यापि वार्त्ता अस्ति। तत्र शुक्लप्रतिपदि द्यूतक्रीडायां क्रीडापरायणस्य वार्षिकजयपराजययोः शुभाशुभफलयोश्च समीक्षा वर्णिता।

द्वितीयायामनुष्ठानविशेषस्तावत् भगिनी भ्रातरं भोजयेत्, भ्रातापि भगिन्यै वस्त्रालंकारादिकं दद्यात्।

नवम्यां विविधैरुपचारैर्जगद्धात्र्याश्चण्डिकादेव्याः पूजा विशेषेण फलं ददातीति श्रूयते।

एकादश्यामयं विशेषविधिः विष्णोरुत्थानोत्सव इति। द्वादश्याम् अपि विविधैरुपचारैर्विष्णुपूजा विहिता अस्ति।

पौर्णमास्याम् उपवासः उमादेव्या अर्चनं, समधिकफलकामनया ब्रह्माविष्णुशिवादीनां पूजनं विहितम्। अस्यां तिथौ नीलवृषोत्सर्गस्य परिचयोऽपि प्रदत्तः। यद्यस्यां पौर्णमास्यां तिथौ कृत्तिकानक्षत्रयोगः स्यात् तर्हि तस्यां तिथौ सर्वशस्यरत्नगन्धादिभिः सह श्वेतवृषे उत्सृष्टे आरण्यभयं निवर्त्तते।

कार्त्तिकस्य शेषभागे सूर्ये विशाखागते चन्द्रे च कृत्तिकायामवस्थिते पद्मकनामा कश्चित् योगविशेषो भवति। तत्र पुष्करतीर्थे अनुष्ठितकार्यस्य समफलं कार्यं भवति। कार्त्तिकस्य शुक्लैकादशीतः प्रभृति पौर्णमासीं यावत् पञ्चसु तिथिषु मत्स्यमांसभक्षणं वर्जनीयम्, इदं रघुनन्दनेनापि विशेषतो व्यक्तम्।

मार्गशीर्षे मासि–पौर्णमास्यां मृगशिरसो नक्षत्रस्य योगे सौवर्णे पात्रे षोडशपलमितं लवणं ब्राह्मणाय देयम्, एवं सति सौभाग्यं लभ्यते।

पौषे मासि—गौणचन्द्रमासतः कृष्णाष्टम्याम् अष्टकाश्राद्धं कर्त्तव्यत्वेनोल्लिखितम्। शुक्लाष्टम्या बुधवासरयोगो महाभद्रायोगोऽभिहितः। तत्र स्नानं दानं जपो होमः तर्पणं चेत् क्रियेरन् नानाफलानि जायन्ते इति श्रूयते। पौर्णमास्यां पुष्यानक्षत्रयोगे तत्र गव्यघृतपूर्णकलसेनाभिषिक्तो घृतेन वासुदेवं स्नपयेत् गन्धपुष्पनैवेद्यैर्नानाविधैः उपचारैः पूजयेच्च।

माघे मासि—कृष्णाष्टम्यां मांसेन अष्टकाश्राद्धं विहितम्। शुक्लायां तृतीयायां गुडलवणदानं विशेषफलाय अलम्। शुक्लाचतुर्थी उमाचतुर्थीति कथिता, तत्रोपवासः कुङ्कुमालक्तकरक्तवस्त्रफलपुष्पादिभिर्विविधैरुपहारैः उमादेव्या अर्चनं करणीयम्। गौडस्मृतौ तु इयं वरदा चतुर्थीति भण्यते। अस्यां तिथौ गणेशस्य पूजा विहिता। सितपञ्चम्यां श्रीपूजा (सरस्वती पूजा) करणीया। सप्तम्यां सूर्यपूजा उपवासश्च विहितौ। तत्परदिने अष्टम्यां पुनरपि विविधैर्भोज्यैः सूर्यस्य सन्तोषणं विहितम्। गौडीयस्मृत्यनुसारिणां अर्कपत्रैर्बदरीपत्रैश्च (शिरसि धृतैः) सह स्नानं सूर्यार्घदानमन्त्राश्च निर्दिष्टाः।

अष्टम्यां भीष्मतर्पणम्।

पौर्णमासी यदि मघानक्षत्रयुक्ता स्यात् तर्हि तत्तिथौ काकेभ्यो बलिर्देयः, ब्राह्मणभोजनं कारयितव्यम्, पितृश्राद्धं च अनुष्ठेयम्। ब्राह्मणसम्प्रदानकतिलदानम् अतीव प्रशस्तम् इत्यभिहितम्।

फाल्गुने मासि—गौणफाल्गुनीयकृष्णाष्टम्यां यदुक्तमष्टकाश्राद्धमेतत् तु साग्निकैरेव प्रतिपाल्यम्। चतुर्दश्यामुपोष्य मृन्मयशिवलिङ्गपूजा प्रशस्या। अस्यां तिथौ उपवास एव मुख्यं कार्यम्, एतदेव शिवरात्रिव्रतम् इत्यभिधीयते।

अमावस्यायां पितृश्राद्धं करणीयम्। अस्यां तिथौ चन्द्रोदयकाले सूर्याचन्द्रमसोः पूजा विहिता। पौर्णमास्यां तिथावुत्तरफल्गुनीनक्षत्रयोगे तत्र ब्राह्मणान् उद्दिश्य शय्यादाने कृते पुंसां मनोज्ञस्त्रीलाभः स्त्रीणां च मनोहरपतिलाभो भवति।

चैत्रे मासि—असितपक्षीयप्रतिपदि स्नातस्य आधिर्व्याधिश्च लुप्यते। अस्यां तिथौ झल्लमल्लाभिधेयानां नटजातिविशेषाणां क्रीडादर्शनं पुण्यजनकम्। प्रतिपद आरभ्य पञ्चमीपर्यन्तासु पञ्चसु तिथिषु नारीणां पूजा भोजनं च प्रशस्तम्। जन्मतिथौ स्वजन्मतिथेः जन्मनक्षत्रस्य गुरुदेवाग्निविप्राणां च पूजा करणीया। षट्तिलाचारोऽपि करणीयत्वेनोक्तोऽस्ति।

इत्थं दृश्यते यत् द्वितीयपरिच्छेदे श्रीदत्तोपाध्यायः चैत्रादितो वत्सरं यावत् प्रतिमासं विविधकृत्यानि उपदिदेश इति। अतश्च इदं वक्तुं शक्यं यत् द्वितीय-

परिच्छेदसमाप्तौ यदेतस्य परिच्छेदस्य यन्नामकरणं कृतम्, तत् सर्वथा युक्तियुक्तं प्रतिभाति'। तथा हि तेनोक्तं-इति श्रीसमयप्रदीपे श्रीदत्तकृतौ वत्सरकृत्यं नाम द्वितीयः परिच्छेदः। इदं वत्सरकृत्याभिधानं सार्थकमिति नास्त्यत्र सन्देह इति।

अथ प्रकीर्णक इति तृतीयपरिच्छेदः परिशेषपरिच्छेदो वा आकृत्या अतीव क्षोदिष्ठः प्राक्तनपरिच्छेदद्वयवत् न तथा प्रयोजनीयः। अस्मिन् परिच्छेदे द्वादश-संक्रान्तयस्तत्कृत्यानि च विशेषभावेन वर्णितानि। प्रसङ्गात् चन्द्रसूर्योपरागे स्नानादि-कृत्यमपि स्वरूपत उपन्यस्तमिति। युगाद्यानां मन्वन्तराणां च स्वरूपाणि समीक्षितानि। तत्र युगाद्यासु युगान्तेषु मन्वन्तरेषु संक्रान्तिषु च स्नानदानश्राद्धादीनां विषयः विशेषभावेन निगदिताः। प्रसङ्गक्रमेण पर्वसु च निषिद्ध-कर्माणि सप्रमाणमुपदिष्टानि। एतदपि प्रसङ्गप्रोक्तं यत् षष्ठ्यां तिथौ पुष्यानक्षत्रस्य रविवासरस्य च सम्बन्धे तद्दिने कार्त्तिकेयस्य पूजा सर्वार्थसाधिकेति। तथा रविवारे सप्तमीतिथिः विजयाख्ययोगकारणमिति। अस्मिंश्च विजयायोगे सूर्यस्य पूजा श्रेयसी। गुरुवासरे द्वादशीतिथौ पुनर्वसोः श्रवणायाः मृगशिरसः वा नक्षत्रस्य योगे तत्र विष्णुपूजा विशेषफलप्रदा। एवं शनिवारे चतुर्थ्यां स्वातीनक्षत्रपाते उमादेव्याः पूजनं विशेषतः फलदायकम्। इत्थं सामान्यतः पूर्णिमाष्टमीद्वादशीचतुर्दशीतिथिषु तृतीयायां च शुभग्रहनक्षत्रयोर्योगे दैवकार्याणि विशेषतः प्रशस्तानीति वर्णितानीत्यलम्।

## समयप्रदीपग्रन्थसम्पादनाय संगृहीतानामालोचितानां हस्तलिखितपुस्तिकानां परिचयः ।

पुनास्थ-डेकान-कलेज-ग्रन्थागारात्, कलिकाता-एसियाटिक-सोसाइटि-पाठागारात्, लन्डन-इन्डिया-आफिस-ग्रन्थभवनाच्च तिस्र एव समयप्रदीपस्य हस्तलिखितपुस्तिकाः समानीताः । अथ च वाराणसेयसंस्कृतविश्वविद्यालयस्य द्वे पुस्तिके संगृहीते। ताः अवलम्ब्य एव संस्करणमिदं प्रस्तूयते। आलोचनसौकर्यार्थम् उक्ता हस्तलिखितपुस्तिकाः यथाक्रमं क, ख, ग, घ, ङ इति रूपेण अभिधीयन्ते। एतासां संक्षिप्त परिचयोऽधुना प्रदीयते ।

**क**—पुनास्थ-डेकान-कलेज-ग्रन्थागारात् संगृहीता। (संख्या ३७१,१८७५-१८७६ आवरणाद् वहिः कस्मिंश्चित् पत्रे नवीनो लेखः समुपलक्ष्यते, स तु २८ इति) प्राचीने देशजपत्रे लिखिता । सम्पूर्णपत्रसंख्या ५५ । पुस्तिकेयं सम्पूर्णा । न खण्डिता । समयः कालो वा कश्चन नात्र लिखितः। देवनागरी इति लिपिभिः लिखितेयम्। प्रमादस्तत्र विशेषतया नोपलभ्यते। दैर्घ्येण २७. ४३२ से० मि० प्रस्थेन च ११. ४३ से० मि० इयम्। प्रतिपृष्ठं दशपङ्क्तिसमन्वितम्। ५५ ख पृष्ठे तु एका एव पङ्क्तिः।

पुस्तिकायां केचन प्रमादा दृश्यन्ते, ते यथा—
वर्णानां द्विरुक्तिः आधिक्यं वा :—धनददोत्र (? धनदोऽत्र) (पृ० ५०)

वर्णानां पातः :—यदीच्छेद् विपुन् (? विपुलान्) (पृ० ४१)

वर्णानामशुद्धिः :—अभुक्ता (? अभुक्त्वा) (पृ० १); पूज्येति (? पूजेति) (पृ० ४५); घृतपात्रप्रदापिना (? घृतपात्रप्रदायिना) (पृ० ५५)

वर्णानां स्थानपरिवर्तनम् :—नरः संवत्सरं युतः (? नरः संवत्सरान् तु यः) (पृ० ४१)

एकविधानां वर्णानां शब्दानां

वा नैकट्यात् कस्यचन
अंशविशेषस्य लोपः :—पृ० २१,५२,६३,६४

नकारस्थले अनुनासिकव्यवहारः :—निबंधेषु (? निबन्धेषु ) (पृ० १ ); चांद्रमासमुख्यम् (? चान्द्रमासमुख्यम्) (पृ० ४३); स्कंदपुराण (? स्कन्द-पुराण) (पृ० ४७ ); वदंति (? वदन्ति) (पृ० ४६); एकवचनांत (? एक-वचनान्त) (पृ० ५०) ; अनंतर (? अनन्तर ) (पृ० ५० )

आरम्भः :—श्रीगणेशाय नमः

श्रेयः समादिशतु सालसपक्ष्मपाते
निद्रयिते अपि दृशौ भृशमुन्नमय्य ।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥

अन्तिमोऽशः :—इति श्रीमहामहोपाध्यायश्रीश्रीदत्तकृतौ समयप्रदीपे प्रकीर्णकः परिच्छेदस्तृतीयस् समाप्तिमगात्। पुष्पिकायाः परवर्त्तिनि भागे किमपि न लिखितमास्ते ।

ख — कलिकाता - एसियाटिक-सोसाइटि-पाठागारस्य पुस्तिका ( हरप्रसाद शास्त्री, डेसक्रिपटिभ क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन दि गभर्णमेन्ट कालेकसन आन्डार दि केयार अफ दि एसियाटिक सोसाइटि, भल्युम ३, ६९७, संख्या जि १०६१६ १क पृष्ठे लिखितं ३५००)। प्राचीने देशजे पत्रे लिखिता । सम्पूर्णपत्रसंख्या ५६ । पुस्तिकेयं न खण्डिता। समयः सं० १८१७ । देवनागरी इति लिपिभिः लिखितेयम् । प्रमादस्तत्र विशेषतया नोपलभ्यते । दैर्घ्येण २६.४६४ से० मि० प्रस्थेन च ११.६८४ से० मि० इयम्। प्रतिपृष्ठं नवपङ्क्तिसमन्वितम् ।

पुस्तिकायां केचन प्रमादा दृश्यन्ते, ते यथा—

वर्णानां द्विरुक्तिः आधिक्यं वा :—भगवद्दैवत्यं (भगदैवत्यं) (? पृ० ३३ )

वर्णानां पातः :—द्वादशमासत्वं (? द्वादशमासात्मकत्वं) (पृ० २५)

वर्णानां स्थानपरिवर्त्तनम् :—सोमस्य (? मासस्य) (पृ० २८)

एकविधानां वर्णानां शब्दानां
वा नैकट्यात् कस्यचन

अंशविशेषस्य लोपः :—पृ० २४

आरम्भः :— धर्मशास्त्रं-ओं श्रीगणेशाय नमः।
श्रेय : समादिशतु सालसपक्ष्मपाते
निद्रयिते अपि दृशौ भृशमुन्नमय्य।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः॥

अन्तिमोऽशः :—इति श्रीमहामहोपाध्यायश्रीदत्तकृते समयप्रदीपे प्रकीर्णकः परिच्छेद-स्तृतीयः। समाप्तोऽयं समयप्रदीपाख्यो ग्रन्थः। शुभमस्तु।

पुष्पिकायाः परवर्ती भागः :—संवत् १८१७ लिखितं काश्यां मध्ये मणिकर्णिकासमीपे गंगाय (? गङ्गायै) नमः।

ग — लन्डन-इन्डिया-आफिस-ग्रन्थभवने सुरक्षितायाः पुस्तिकायाश्चित्रम् (९०) (जुलियास एगेलिङ, क्याटालग अफ दि स्यान्सक्रिट म्यानुसक्रिप्टस इन दि लाइब्रेरी अफ दि इण्डिया आफिस, पार्ट ३, पृ० ५३८-५३९, संख्या १९८३)। सम्पूर्णपत्रसंख्या ९८; इयं च संख्या प्रमादात्मिका। २ क संख्यकं तथा ३ क संख्यकं पत्रं नास्ति; अथ ४ ख ५ ख इत्य-नयोः वारद्वयमेवोल्लेखो दृश्यते। पुस्तिकेयं सम्पूर्णा। न खण्डिता। समयः सं० १७७९। देवनागरी इति लिपिभिः लिखितेयम्। प्रमादस्तत्र विशेषतया नोपलभ्यते। सम्पादको विज्ञापयति दैर्घ्येण २४.१३ से०

(९०) अस्मद्भिर्लब्धं यत् चित्ररूपं तस्य प्रथमपत्रमित्थम् :—

'Recordak' Microfilm Service
Title of Document Filmed I. O. L. M. /3/ 340
Sanskrit Manuscript Samaya-Pradipa
Place of Origin India Office Library
Photographed by I. Briggs
Kodak LTD. Recordak Division
London

मि० प्रस्थेन च १०.१६ से० मि० इयम्। प्रतिपृष्ठं दशपङ्क्ति-समन्वितम्।

पुस्तिकायां केचन प्रमादा दृश्यन्ते, ते यथा—

वर्णानां द्विरुक्तिः आधिक्यं वा :—सामान्यन्यविधिः (? सामान्यविधिः) (पृ० ११); अधिमासापातेऽपि (? अधिमासपातेऽपि) (पृ० २५); वर्णानां पातः :—विषयतैव (? विषयतयैव (पृ० २१); अत्रापि (? अन्यत्रापि पृ० २७)

एकविधानां वर्णानां शब्दानां वा
नैकट्यात् कस्यचन अंशविशेषस्य लोपः :—पृ० ११,१६

आरम्भः :— स्वस्ति श्रीगणेशाय नमः
श्रेयः समादिशतु सालसपक्ष्मपाते
निद्राजिते अपि दृशौ भृशमुन्नमय्य।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥

अन्तिमोऽशः :—इति श्रीमहामहोपाध्यायश्रीदत्तकृते समयप्रदीपे प्रकीर्णकः परिच्छेद-स्तृतीयः समाप्तः। शुभमस्तु ॥

पुष्पिकायाः परवर्त्ती भागः :—संवत् १७७६ समय : सावन प्रथमसुदी १०।

घ — वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनास्य हस्तलिखित-विभागात् संगृहीता। (कुबेरनाथ शुक्ल, क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन सरस्वती भवन, भल्युम ३, संख्या ११८८७, १ क पृष्ठे लिखितं वनारस संस्कृत कालेज अभिनव संग्रह नं० १८०) प्राचीने देशजे पत्रे लिखिता। सम्पूर्णपत्रसंख्या १२। यद्यपि ग्रन्थसूच्यां लिखितं पुस्तिकेयं सम्पूर्णा तथापि विशेषालोचनेनावगम्यते इयं खण्डिता। प्रथमपरिच्छेदे त्रयोदशचतुर्दशपत्राणि अपेक्षन्ते, तथा द्वितीय-तृतीयपरिच्छेदे न्यूनतया विंशत्येकविंशतिपत्राणि च, तृतीयपरिच्छेदस्तु क्षोदिष्ठः। समयः संवत् १८६७। देवनागरी इति लिपिभिः लिखितेयम्।

प्रमादस्तत्र विशेषतया नोपलभ्यते। दैर्घ्येण ३८.५४४ से०/मि० प्रस्थेन १३.७१६ से० मि०। प्रतिपृष्ठं दशपङ्क्तिसमन्वितम्। १२ ख पृष्ठे पङ्क्तित्रयम्।

पुस्तिकायां केचन प्रमादा दृश्यन्ते, ते यथा —

वर्णानां द्विरुक्तिः आधिक्यं वा :-एकाहारपरत्तैव (? एकाहारपरतैव) (पृ० २ क); उदयकालव्यापितिथिय्यादर: (? उदयकालव्यापितिथ्यादरः) (पृ० ७ क); सम्पूर्णसमीप्तमीयोगः (? सम्पूर्णसप्तमीयोग:) (पृ० ७ ख); विमानेमानेनार्कवर्णेन (? विमानेनार्कवर्णेन) (पृ० ८ ख); चाक्रवाकप्रयुक्तेन (? चक्रवाकप्रयुक्तेन) (पृ० ९ क)

वर्णानां पातः :—न चानुगमः (? न चाननुगमः) (पृ० ३ क); विवाग्नौ (? विवाहाग्नौ) (पृ० ३ ख); संकाभावात् (? संकोचाभावात्) (पृ ४ क); क्षान्तिनसूया (? क्षान्तिरनसूया) (पृ० ५ क); उपवासे तथाद्धे (? उपवासे तथा श्राद्धे) (पृ० ५ क); विधिविशेषात् (? विधिविशेषत्वात्) (पृ० ७ क); न्यायमूलमेव (? न्यायमूलकमेव) (पृ० ७क); न सम्भवत्ये (? न सम्भवत्येव) (पृ० ७ख); स्वरीरगतिर्भवेत् (? स्वशरीरगतिर्भवेत्) (पृ० ९ क); पूजां देव्याः अधिकारात् (? पूजायां देव्याः अधिकारात्) (पृ० १० ख); शुक्ल चतुजाता (? शुक्लचतुर्थ्यां तु जाता) (पृ० १२ ख)

वर्णानामशुद्धिः :—अमुक्त्रा (? अभुक्त्वा) (पृ० २ क); अशंभव (? असंभव) (पृ० २ क); न व्रतीनां (? न व्रतिनां) (पृ० २ क); विष्णूवचनात् (? विष्णुवचनात्) (पृ० २ ख); न व्रतीनां (? न व्रतिनां) (पृ० २ख); सक्तं (? शक्तं) (पृ० ३ क); अवस्यं (? अवश्यं) (पृ० ३ क); विशंवादि (? विसंवादि) (पृ० ३ ख); उपवाशः (? उपवासः) (पृ० ६ क); दीवातनविधिः (? दिवातनविधिः) (पृ० ७ ख); रात्रीमात्रं (? रात्रिमात्रं) (पृ० ७ ख); त्रिषवणस्नानात् (? त्रिसवनस्नानात्) (पृ० ९ख); हेमपालिनः (? हेममालिनः) (पृ० ११ क); संशिता (? संश्रिता) (पृ० १२ क)

एकविधानां वर्णानां शब्दानां
वा नैकट्यात् कस्यचन अंशविशेषस्य लोपः :—पृ० २, ८

नकारस्थले अनुनासिकव्यवहारः : –निबंधेषु (? निबन्धेषु) (पृ० १ख); वदंतो (? वदन्तो) (पृ० २क)

आरम्भः :— श्रीगणेशाय नमः श्रीगुरुभ्यो नमः
श्रेय(?)समादिशतु सालसपक्ष(?)पाते
निद्रायिते अपि दृशौ भृशमुन्नमय्य
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः।

अन्तिमोऽंशः : -इति श्रीयाज्ञवल्के (? ०वल्क्ये) धर्मशास्त्रवर्णनो (? ०वर्णनं) नाम निर्णयाधिकारः समाप्तः।

पुष्पिकायाः परवर्ती भागः :—संवत् १८९७ सिती (? मिति) कार्त्तिक सुदी १० ग्रंसममाप्तम् (? ग्रन्थः समाप्तः) शुभमस्तु श्रीरामाय नमः।

द्रष्टव्यम् :— अन्तिमे अंशे यल्लिखितं तत् सम्पूर्णमेव प्रामादिकम्।

ङ — वाराणसेयसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनस्य हस्तलिखित-विभागात् संगृहीता। (कुबेरनाथ शुक्ल, क्याटालग अफ स्यान्सक्रिट म्यानुसक्रिप्टस इन सरस्वतीभवन, भल्युम ३, संख्या १३०६३०)। प्राचीने देशजे पत्रे लिखिता। सम्पूर्णपत्रसंख्या ५३। पुस्तिकेयं सम्पूर्णा। न खण्डिता। यद्यपि ग्रन्थसूच्यां लिखितं समयः कालो वा कश्चन नात्रास्ति इति, तथापि विशेषालोचनेनेदं ज्ञायते यदस्य लिपिकालो हि संवत् १८४६। देवनागरी इति लिपिभिः लिखितेयम्। प्रमादस्तत्र विशेषतया नोपलभ्यते। दैर्घ्येण २६.१६२ से० मि० प्रस्थेन १२.१६२ से० मि०। प्रतिपृष्ठं प्रायेण एकादशपङ्क्तिसमन्वितम्। दश-पङ्क्तयस्तु १ख, २क, ४ख, ६ख, ७, ६, १०, ११क, १२, १३क, १४, १५, (क पत्रे अन्तिमपङ्क्तिचतुष्टयं मस्या विवर्णीकृतम्), १६क,

१९ख, २०क, ३०क, ३१क, ४०क पत्रेषु दृश्यन्ते। ३७क, ३८क-पृष्ठे द्वादशपङ्क्तयः ५, ६क, ८ पृष्ठेषु नवपङ्क्तयः समुपलभ्यन्ते, अथ च ५३ख पृष्ठे पङ्क्तिचतुष्टयमुपलभ्यते ।

पुस्तिकायां केचन प्रमादा दृश्यन्ते, ते यथा —

वर्णानां द्विरुक्तिः आधिक्यं वा :-आरब्धव्रतेमध्ये (? आरब्धव्रतमध्ये)(पृ० २ख); ब्राह्मणः सम्प्रदानं (? ब्राह्मणसम्प्रदानं) (पृ० ४क); आराधानाय (?आराधनाय) (पृ० ७क); तत्र च एकदेवशद्वारा (? तत्र च एकदेशद्वारा (पृ० १०क); नैमित्तिकपदेन नैको द्दिष्टमुच्यते (? नैमित्तिकपदेनैकोद्दिष्टमुच्यते) (पृ० १२क); माघे मासि युधि युधिष्ठिर (? माघे मासि युधिष्ठिर) (पृ० १८ख); परत्रा शिवमृच्छति (? परत्र शिवमृच्छति) (पृ० २०क); अधिकारणविषयः (? अधिकरणविषयः) (पृ० २२ख); श्रीपतयेऽअव्यय, (? श्रीपतेऽव्यय) (पृ० २४ख); क्षीरेण येन नराः (क्षीरेण ये नराः) (पृ० २७क); विविधानानि च (? विविधानि च) (पृ० २८क); वाराहपुराणावदावभिधानात् (? वाराहपुराणादावभिधानात्) (पृ० ३०ख); लोकाय्या यामचतुष्टये (? लोकायामचतुष्टये) (पृ० ३९क); तृप्ता भवति चण्डिकाका (? तृप्ता भवति चण्डिका) (पृ० ४१क); स्नापियित्वा (? स्नापयित्वा) (पृ० ४६क); निपातिनमेव धेनवः (? निपानमिव धेनवः) (पृ० ४७क); भक्तजनैर्मनुष्यैः मनुष्यैः (? भक्तजनैर्मनुष्यैः) (पृ० ४७ख); फाल्गुनीयुक्ता (? फल्गुनीयुक्ता) (पृ० ४८ख); दिनाविहितकालेन (? दिनविहितकालेन) (पृ० ५०क); निशश्चयपरं (? निश्चयपरं) (पृ० ५० ख); ज्योतितिष्टोमादि (? ज्योतिष्टोमादि) (पृ० ५३क)

वर्णानां पातः :—जीव सति चाण्डालो (? जीवन् भवति चाण्डालो) (पृ० २ख); त्वसौ (? किं त्वसौ) (पृ० ३ख); सान्यो दशधा स्मृतः (? सामान्यो दशधा स्मृतः) (पृ० ४क); संकाभावात् (? संकोचाभावात्) (पृ० ५क); अश्नन्तरे सिध्यन्ति (? अश्नन्तरेव सिध्यन्ति) (पृ० ५ख); तत्रै युग्मविधिः (? तत्रैव युग्मविधिः) (पृ० ६क); पूर्वातित होमः (? पूर्वप्रतीतहोमः) (पृ० १३ख); आदित्यहृदयः (? आदित्यहृदयप्रियः (पृ० १४ख); तिपुरान्तक (? त्रिपुरान्तक) (पृ० १६ख);

तः स्नानं नित्यस्नानं (? प्रातःस्नानं नित्यस्नानं) (पृ० १८ख); अथ शिव्रतानि (? अथ शिवव्रतानि) (पृ० १९क); पूज्याकं (? पूज्यार्कं) (पृ० १९क); एकादश्याम वासो (? एकादश्यामुपवासो) (पृ० २१ख); ब्रह्मणाय (? ब्राह्मणाय) (पृ० २३ ख); कृश प्रयतः शुचिः (? कृशरं प्रयतः शुचिः) (पृ० ३३क); संशिता (? संश्रिता) (पृ० ३३क); धान्यानि सप्ताम्बसंयुतानि (? धान्यानि सप्ताम्बरसंयुतानि) (पृ० ३८क); उक्षिप्य (? उत्क्षिप्य) (पृ० ३८क); याच्ञाशूक्रयणम् ( याच्ञाशून्यक्रयणम्) (पृ० ४४क); सितमक्षाणम् (? सितमुक्षाणम्) (पृ० ४४ख ; रोगमितिपाठारम् (? रोगमिति पाठान्तरम्) (पृ० ४७क); प्रगुक्तं (? प्रागुक्तं) (पृ० ४७क); काले धनिष्ठादि नाम तस्मिन् (? काले धनिष्ठा यदि नाम तस्मिन्) (पृ० ४८ख); चेत् स्यां (? चेत् तस्यां) (पृ० ४८ख); तस्मात् कर्म तथार्यं (? तस्मात् कर्म तथा कार्यं) (पृ० ४९क); विषुवाय सन्निधौ (? विषुवायनसन्निधौ ) ( पृ० ४९ख ); अथ ग्रहण लः (? अथ ग्रहणकालः) (पृ० ५०ख); ज्ञान एव वृत्तेः (? ज्ञान एव प्रवृत्तेः) (पृ० ५०ख); अदर्शन क्षेऽपि ( ? अदर्शनपक्षेऽपि) (पृ० ५१क); का प्रददाति (? कामं प्रददाति) (पृ० ५३ख)

वर्णानामशुद्धिः :—व्रतीनां (? व्रतिनां) (पृ० २ख); होमादीना संगत्वं (? होमादीनामङ्गत्वं) (पृ० ५क); श्रेयमिति (? श्रेयः इति) (पृ० ५ख); पतिशुश्रूणा (? पतिशुश्रूषा) (पृ० ६क); पक्षहानौ ··· शामे (? पक्षहानौ··· सामे) (पृ० ८क); दशमियुताम् (? दशमीयुताम्) (पृ० ८क); वाचनीकम् एव व्यवस्थां (? वाचनिकीमेव व्यवस्थाम्) (पृ० ८ख); जा भवेत् (? या भवेत्) (पृ० ९ख); दसधर्माः (? दशधर्माः) (पृ० १०ख); षुक्लाषाढादि (? शुक्लाषाढादि) (पृ० ११ख); विघ्नविनासहेतोः (? विघ्नविनाशहेतोः) (पृ० १३ख); सक्यत्वात् (? शक्यत्वात्) (पृ० १४क); शकलपक्षम् (? सकलपक्षम्) (पृ० १४क); भूमौ सुपेत् (? भूमौ स्वपेत्) (पृ० १६क); परामर्षात् (? परामर्शात्) (पृ० १९ख); शीवमन्दिरम् (? शिवमन्दिरम्) (पृ० २६क); अथ वागव्रतानि (? अथ नागव्रतानि) (पृ० २६ख); उपेषित्वा (? उपोष्य) (पृ० ३४ख); राशीषु (? राशिषु) (पृ० ३८क); वारुणैः शौरैः (? वारुणैः सौरैः) (पृ० ४०क); एवं श्वजन्मदिवसे (? सर्वः स्वजन्मदिवसे) (पृ० ४९क); मेघादिच्छन्ने शा (? मेघादिच्छन्ने

सा) (पृ० ५०ख); व्यतीपाते (? व्यतिपाते) (पृ० ५१क); श्रीसंकर (? श्रीशकर) (पृ० ५३ख)

एकविधानां वर्णानां शब्दानां वा नैकट्यात् कस्यचन अंशविशेषस्य लोपः—पृ० ६, ९

आरम्भः :— अ श्रीगणेशाय नमः
श्रेयः समादिशतु सालसपक्ष्मपाते
निद्रायिते अपि दृशौ भृशमुन्नमय्य ।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥

अन्तिमोऽशः :—इति श्रीमहामहोपाध्यायश्रीदत्तकृते समयप्रदीपे प्रकीर्णकः परिच्छेद-स्तृतीयः। समाप्तोऽयं समयप्रदीपाख्यो ग्रन्थ :।
शुभमस्तु ॥

पुष्पिकायाः परवर्ती भागः :—श्रीकाशीविश्वेश्वराय नमः श्रीसकराभ्यां (?) नमः श्रीकृष्णाय। सं १८४९

मिथिलाक्याटालगे उक्तः अयं समयप्रदीपग्रन्थः प्रमादात्मक इति मन्यामहे। एतत् तु प्रारम्भिकश्लोकात् अन्तिमश्लोकाच्चानुमीयते [ग्रन्थसंख्या ४१४]।

आरम्भः :— ओं नमः शिवाय
श्रेयः समादिशतु सालसपक्ष्मपाते
निद्रायिते अपि दृशौ भृशमुन्नमय्य ।
सम्बाध्य(?)मानचरणाम्बुजजातहर्षो
लिक्ष्मी (?) मुखेक्षणपरः परमेश्वरो वः ॥

निबन्धेषु निबन्धादि ( ? ) वचनानि निचिन्वता (?)।
श्रीतत्त्वेन (?) व्रतादीना (?) साश्माकृष्य (?) लिख्यते ॥

अन्तिमोऽंशः :-श्रीमेधा (?) ज्ञान (?) वात्सल्यं (?) क्षमा (?) योगान् (?) महामते
योगेज्ञनं (?) यशः फीर्ति (?) मही (?) देवादवापु (?) यात्।
आरोयं (?) सप्रभात्वें (?) भास्कराल्लभते ध्रुवम् (?)
गतिमिष्ठां (?) यथा काम....................क्रमः
विघ्नो न जायते तस्य यजेवस्तु (?) विनायकम् ॥ इति प्रकीर्णपरिच्छेदः।

के० पि० जयसवाल, ए० व्यानार्जि शास्त्री च इत्याख्यौ मिथिला-क्याटालगग्रन्थस्य सम्पादकौ समयप्रदीपस्य एतदतिरिक्तान् पञ्च ग्रन्थान् उल्लिखितवन्तौ। इमे च ए० वि० सि० डि० इ० इति नाम्ना अभिधीयन्ते। एतेषां मध्ये ए० डि० इ० इत्येतेषु समयोल्लेखो नास्ति। वि० सि० इत्यनयोः समयः संवत् १७१४। मधुसूदन-ठाकुरविरचिता समयप्रदीपजीर्णोद्धारः इत्यभिधेया समयप्रदीपस्य टीका वर्त्तते। तदर्थं द्रष्टव्यं मिथिला क्याटालग पृ० ४९०-४९२।

अस्याः च टीकायाः चतस्रः एव हस्तलिखितमातृकाः समुपलभ्यन्ते। प्रथमायाः रचनाकालः लक्ष्मणसंवत् ५०५, द्वितीयायाः १२९०, तृतीयायाः १२५६, चतुर्थ्याः शकः १८१३, अस्मिन् एव प्रसङ्गे अन्तिमपुस्तिकायाः पुष्पिकापरवर्तिभागो द्रष्टव्यः :-

१२१३ शकाब्दे (प्रमादोऽयम्। १८१३ इत्येव भवितुमुचितम्) १८९१ ईशाब्दे ठव्येभकाग्रामवास्तव्येन षट्चत्वारिंशद्वर्षवयस्केन मीमांसकश्रीचित्रधरमिश्रेण श्री५मन्मिथिलाधीशकरकल्पतरुच्छाया-श्रितेन दरभंगाराजधान्यां लिखितमेतत् पुस्तकमिति शिवम्। (मिथिला क्याटालग, पृ० ४२९)

# समयप्रदीपः

[1]श्रीगणेशाय नमः

श्रेयः समादिशतु सालसपक्ष्मपाते
[2]निद्राजिते अपि दृशौ भृशमुन्नमय्य ।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥ 5

निबन्धेषु निबद्धानि वचनानि विचिन्वता ।
श्रीदत्तेन व्रतादीनां सारमाकृष्य लिख्यते ॥

अत्र पूर्वदिने स्नानादिना शरीरशुद्धिं कृत्वा निरामिषमेकवारं भुक्त्वा दन्तान् [3]संशोध्य व्रतदिने प्रातः स्नात्वा सूर्योदये व्रतं गृह्णीयात्। तत्र प्रयोगः । 10

अद्य सूर्यवारेत्यादिना प्रकारेण [4]व्रतोपयुक्तं कालविशेषं निर्दिश्य भगवन् सूर्य भगवत्यो देवता [5]उपवासनक्तमयाचितं वाहं करिष्ये इत्य[6]भिलप्य संकल्पं कुर्यात्। [7]अनेकाहसाध्यव्रते अद्यस्थाने [8]अद्यादीति विशेषः । [9]तत्र देवलः ।

---

१ ग स्वस्ति श्री, क श्री
  घ नमः श्री गुरुभ्यो नमः (आधिक्येन)
२ घ ङ निद्रायिते
३ क अशोध्य
४ घ ङ व्रती युक्तं
५ क नक्तमुपवासमयाचितं
  घ नक्तमयाचितं (उपवासनक्तमयाचितं स्थले)
६ ग °भिधाय (अभिलप्य स्थले)
७ ङ अनेकाहसाध्ये व्रते
८ क अद्यदीति
  ग अद्यादीति प्रयोगः
  घ अद्यादि इति
९ ख घ अत्र

अभुक्त्वा [1]प्रातराहारं स्नात्वाचम्य समाहितः।
सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥

[2]प्रातर्व्रतमाचरेदिति सम्बन्धः। प्रधानपदार्थान्वयस्याभ्यर्हि-[3]तत्वात्। अभुक्त्वाहारमित्यर्थात् [4]पूर्वदिने एकवचनानुरोधात् [5]एकाहारम-
5 कृत्वेत्यर्थात् एकभक्तमायाति, अनुपादेयसंख्यायाः अविवक्षितत्वात् [6]नेति चेन्न, [7]एकशेषकल्पने प्रमाणभावादेकाहारपरतैव। ग्रहादौ तु [8]प्रत्युद्देश्यं वाक्यपरिसमाप्तेः सर्वत्र सम्बन्धो [9]न चेहोद्देश्यत्वम्। किंचाविशेषिताहार-निवृत्तिपरत्वायोगाद्[10]विशेषापेक्षायामे[11]कवचनमपि नियामकम्।

केचित्तु प्रातराहारमिति [12]अनुयोजयन्ति। तन्मते [13]दिवैकभ-
10 क्तमशास्त्रार्थः, एवं [14]चैकभक्ते प्रमाणं नास्तीति वदन्तः अज्ञा [15]एव, किं च

---

१ ख अत्र (आधिक्येन)
२ घ ङ अत्र प्रातर्व्रतम्
३ ग अभिहितत्वात्
४ घ पूर्वदिने इत्यस्मात् आहारमभुक्त्वा इत्यनेन व्रतपूर्वदिने एकाहारत्वम् (आधिक्येन)
५ क ख एकाहारमकृत्वेत्यर्थात् नास्ति।
६ ख घ ङ इति चेत् तथापि (नेति चेन्न स्थले)
७ ग तथाऽप्येकशेष° (एकशेषकल्पने स्थले)
८ घ प्रत्युद्देशं
९ ग न चेहोपद्देश्यत्वम्, घ ङ नेहोद्देश्यत्वम्
१० घ विशेषापेक्षायामपि एकवचनं नियामकं
११ ख एकवचनम् नास्ति
१२ क नियोजयन्तः
　ग योजयन्ति
१३ ग दिवैकभक्तमानशास्त्रार्थः
　ख घ ङ दिवैकभुक्त°
१४ घ चैकभुक्ते
१५ ङ एव नास्ति

---

1-2 बहुनिबन्धकारैः उदाहृतम्। निर्णयसिन्धु, पृ० १७
रघुनन्दन, एकादशीतत्त्व, प० ६। किन्तु मुद्रितदेवलस्मृतिग्रन्थे नोपलभ्यते।

[1]बहुषु व्रतेषु [2]एकभक्ताभिधानादाचारानुगृहीताद् [3]व्रतमात्राङ्गताबोधकवेदानुमानम्, अन्यथा बहुकल्पनमाचारबाधश्च स्यादिति, [4]यत्रापि व्रते एकभक्तं न [5]श्रुतं [6]तत्रापि तदङ्गम्। [7]गौड़ास्तु

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।
धर्मोपवासे कुर्वीत नैव [8]भक्तचतुष्टयम्॥ 5

इति वाक्यादे[9]कभक्तं मन्यन्ते, तथा एकभक्तं [10]पारणं च

दिवैव कर्त्तव्ये [11]पारणादिने पुनर्भोजनं न कर्त्तव्यम्। आद्यन्तदिनयोः सायंभोजननिवृत्तिविधानात्। 'व्रतं निशामुखे ग्राह्यं वहिस्तारकदर्शनम्' इति [12]विष्णूक्तिः प्रायश्चित्ताख्यव्रतविषयः प्रक्रमात्।[13]सूर्यादिव्रतेष्वपि यत्र पूर्वदिन एव व्रतग्रहणं श्रुतं तत्र तथास्तु। 10

---

१ क बहुषु एव (बहुषु स्थले)
२ ख एकभुक्ता
३ ख व्रतमात्राङ्गतया बोधः चेत्
घ व्रतमात्राङ्गतया
४ घ तत्रापि
५ ख ङ सूचितम्
६ घ अत्रापि
७ ख गौड़ाः (गौड़ास्तु स्थले)
८ घ ङ भुक्तिचतुष्टयम्
९ ख ग ङ एकभुक्तं
घ भुक्तिचतुष्टयम्
१० ख ग घ ङ पारणा
११ घ पारणदिने च
१२ घ ङ विष्णूक्तं
१३ ख घ ङ सूर्यव्रतेष्वपि

---

**4-5** रघुनन्दन, एकादशीतत्त्व, पृ० २९ पाठभेदः — उपवासफलं प्रेप्सोर्वर्ज्यं (धर्मो०........ नैव स्थले)

केचित्तु [१]सर्वत्र पूर्वदिन [२]एव सायंसन्ध्याकरणानन्तरं व्रतग्रहणमिच्छन्ति[३] वाराहपुराणादौ बहुशस्तथाभिधानात्[४]। [५]अभुक्त्वेत्यादिवाक्यस्यायमर्थः[६]। प्रातः स्नात्वा व्रतमुपवासादिकं [७]कुर्यात् न तु प्रातःसंकल्पकर्त्तव्यतापरत्वमस्य वाक्यस्येत्याहुः। तच्च [८]गृहीतं व्रतं पालनीयम्। [९]तदाह छागलेयः।

5 पूर्वं व्रतं [१०]गृहीत्वा यो नाचरेत् काममोहितः।
जीवन् भवति चाण्डालो मृतः श्वा [११]चैव जायते॥

काममोहित इत्यभिधानादसम्भवे त्यागो न दोषाय। तथा च देवलः।

सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम्।
अव्रतघ्नानि कीर्त्यन्ते सकृदेतानि शास्त्रतः॥

---

१ घ ङ यत्र
२ घ ङ एव नास्ति
३ ख इति (इच्छन्ति स्थले)
४ ग स्तथा विधानात्
५ क न तु प्रातःसंकल्पकर्त्तव्यतापरत्वमस्य वाक्यस्य (तथाभिधानात् इत्यतः परम्)
६ घ ङ अभिप्रायः (अर्थ स्थले)
७ घ ङ गृह्णीयात् कुर्यात्
८ ख घ ङ व्रतं गृहीतं
९ क तदाह नास्ति
ख ङ यदाह
१० घ गृहीत्वाथ
११ ख घ ङ चाभिजायते (चैव जायते स्थले)

---

5–6 निर्णयसिन्धु, पृ० १९ पाठभेदः—
चाभिजायते
श्लोकात् पूर्वं गृहीतव्रतत्यागे तु मदनरत्ने छागलेयः इति दृश्यते
अग्निपुराणे गरुड़पुराणे पाठ ईदृक्
क्रोधात् प्रमादाल्लोभाद् वा व्रतभङ्गो भवेद् यदि।
दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा॥
निर्णयसिन्धु, पृ० १९
8–9 मुद्रितदेवलस्मृतौ नास्ति। रघुनन्दन, तिथितत्त्व, पृ० ८–९
पाठभेदः—कथ्यन्ते (कीर्त्यन्ते स्थले)

सर्वभूतभयं व्याघ्रादिदुष्टजन्तुभ्यो भयं, [1]व्याधिर्व्रताकरणजन्यरोगविशेषो व्रतप्रतिबन्धक्षमो वा, प्रमादो विस्मरणम्, गुरुशासनं गुरोराज्ञा, सकृदित्यभिधानादेष्व[2]पि निमित्तेषु [3]व्यावृत्तौ व्रतलोप एव, [4]कामतस्तु त्यागे प्रत्यवायो[5]ऽपीति बोद्धव्यं, [6]मृतकसूतकयोरपि न व्रतत्यागः। 'न व्रतिनां व्रते' इति [7]विष्णुनाभिधानात्। व्रतिनामारब्धव्रतानां, तेनारब्धव्रतपालनमशौचे अपि कर्त्तव्यं [8]नत्वारम्भ इत्यर्थः। [9]व्रते साङ्गप्रयोगाङ्गे अशौचस्य सूतकेऽपि व्रताङ्गकर्मकरणं [10]प्रतिप्रसवप्रतिपादनात्। अतो व्रताङ्गदेव[11]पूजाद्यनुष्ठानमपि न [12]विरुद्धम्।

गौड़ास्तु[13] मन्त्रशून्यस्नानपूर्वकं मानसपूजादिकमिच्छन्ति, स्त्रिया तु आरब्धव्रतमध्ये रजोयोगे पूजादिकम् अन्येन कारयितव्यम्। 'यदा त्वशुद्धा

१ ग व्रताकरणजन्यरोगविशेषो व्याधिः (व्याधिर्व्रताकरणजन्यरोगविशेषो स्थले)
ङ व्रत.........विशेषो नास्ति
२ ख घ अपि नास्ति
३ क ग आवृत्त्या व्रतपालने लोप
४ घ कामतस्त्यागे
५ ख ङ एव (अपीति बोद्धव्यं स्थले)
६ ग मृत (मृतक स्थले)
ख घ ङ सूतकमृतकयोरपि
७ ख घ विष्णुवचनात्
८ ख घ ङ न चारम्भ
९ क व्रते स्वाङ्गे प्रयोगाङ्गे शौचस्य तत्रैव प्रतिप्रसवात्
१० ख घ ङ प्रतिप्रसवात्
११ ख ङ देवता°
१२ ख घ ङ निषिद्धम्
१३ घ तु नास्ति

4 विष्णुस्मृति, ३२.४९

तदान्येन कारयेदि'ति [1]मत्स्यपुराणीयतृतीयादर्शनात्। [2]कायिकन्तु स्वयमेव कुर्यादिति योगीश्वरः।

ननु किमिदं व्रतं [3]नाम किं वा तस्य [4]परिपालनम्।

व्रतमुपवासादि, पालनं तस्यानुष्ठानमिति चेन्न, अननुगमात् [5]अतिप्रसङ्गाच्च, 5 अत एव संकल्पो व्रतमिति निरस्तं लौकिकसंकल्पव्यापनात्। [6]पाल्यः संकल्पो [7]व्रतमिति [8]चेन्न, व्रतं पालनीयमिति विध्यनुपपत्तेः पालनस्याप्याज्ञानाच्च। [9]शास्त्रीयसंकल्पो व्रतमिति [10]चेन्न, व्रतत्वेनैव शास्त्रीयत्वात्। व्रतत्वेन परिगणितं व्रतमिति [11]चेत्, [12]तर्हि व्रतशब्द एव किं विधत्ते इति पृच्छामः। उच्यते स्वकर्त्तव्यविषयो[13]नियतसंकल्पो व्रतम्। स च द्विविधो भाव- 10 विषयोऽभावविषयश्च, [14]तथा इदं मया कर्त्तव्यमेव इदं [15]मया न कर्त्तव्यमेवेति। लोके द्वादशे संकल्पे व्रतपदमस्त्येव व्रतमेव नियोगविषयस्तस्यैवारम्भसमाप्तिफलसम्बन्धदर्शनात्। [16]पालनं तु तस्याङ्गम्। संकल्पविषयीभूतार्थकरणं

---

१ क ग मत्स्यपुराणीयान्ततृतीयादर्शनात्, घ ङ मत्स्यपुराणीयायास्तृतीया°
२ ग कायिकं च
३ घ नाम नास्ति
४ घ ङ पालनम्
५ क अतिप्रसङ्गाच्च नास्ति
६ घ यतः (पाल्यः स्थले)
७ ग व्रतमिति चेन्न नास्ति
८ ख ङ चेत् (चेन्न स्थले)
९ ङ शास्त्रीयः
१० ङ चेत् (चेन्न स्थले)
११ ग घ चेन्न (चेत् स्थले)
१२ ख तर्हि नास्ति
१३ ग घ ङ नियतः
१४ घ यथा
१५ घ ङ मया नास्ति
१६ घ पालनं नास्ति

---

1 निर्णयसिन्धु, पृ० २१ तथापि हेमाद्रौ पाद्मे
गर्भिणी सूतिकादिश्च कुमारी वाथ रोगिणी।
यदाशुद्धा तदान्येन कारयेत् प्रयता स्वयम्॥

9 रघुनन्दन, एकादशीतत्व, पृ० ७ स्वकर्त्तव्यविषयो
नियतः संकल्पो व्रतमिति श्रीदत्तहरिनाथवर्धमानप्रभृतयः

पालनम् । तच्च पुरुषार्थमपि, [1]अनृतगणमध्ये हारीतेन संकल्पानृतपरिगणनात् । संकल्परूपत्वेन व्रतस्य [2]करणम् अनुपपन्नं तस्यापि [3]संकल्परूपत्वादिति चेन्न, दानं दद्यादिति बहूपपत्तेः । दानपदं [4]देयपरमिति चेत् तर्हीहापि व्रतपदं [5]व्रतविषयीभूतोपवासादिपरमस्तु । यद् वा व्रतं गृह्णीयाद् व्रतमारभेतेत्यर्थः । आरम्भश्च प्रयोगाद्यपदार्थ इति व्रतपदं प्रयोगपरम् । [6]तदादिभूतश्च पदार्थः 5 [7]संकल्प एवेति पक्षद्वयेऽपि [8]प्रातरेव संकल्पकरणम् । केचित्तु व्रतपदं संकल्पपूर्वककर्त्तव्योपवासादिशक्तं [9]मन्यन्ते । न चाननुगमः । संकल्पपूर्वकत्वेनैव-अनुगमात् । एवं [10]तूपवासादीनामेव प्राधान्यं संकल्पश्च तत्राङ्गमित्याहुः, तन्न नागृहीतविशेषणान्यायेन संकल्पवाचित्वस्यैव [11]युक्तत्वात्, संकल्पश्च मयैतत् कर्त्तव्यमेवेत्येवं नियताकार इति [12]भवद्भिरपि वक्तव्यमेवेति[13] अन्यथा 10 दर्शपौर्णमासादेरपि व्रतत्वापत्तेः । सर्वत्र प्रयोगोपक्रमे [14]साभिलापः संकल्पः शास्त्रार्थ इति प्रक्रमाधिकरणे [15]दर्शितत्वात्, किंत्वसौ कामनानुवृत्त्यादुपाधिः [16]संकल्पान्त एव कामनाविच्छेदे अकरणेऽपि [17]न मिथ्यासंकल्पदोषभागितेति

---

१ घ ङ अनृतगणनमध्ये
२ ख ग घ ङ ग्रहणं
३ ग घ संकल्परूपत्वे
४ क देयमिति
  ख देयपरमत्र इति
  ङ देयमात्रेति
५ ख व्रतविषयोपवासादि
६ ख ङ तदादिभूतः
७ ग संकल्पश्चेति
८ ङ प्रातः इत्यारभ्य इति (8) पर्यन्तं नास्ति
९ ख ग घ मन्यन्ते नास्ति
१० ग तूपवासादीनामापादानामेव
११ ख घ ङ उचितत्वात्
१२ क भवद्भिः कर्त्तव्यमेवेति
१३ घ ङ इति नास्ति
१४ ग साभिलाषश्च
१५ ख घ ङ व्युत्पादितम्
१६ संकल्पान्त....विच्छेदे ख ग घ पाठः प्रामादिकः
१७ क न नास्ति

तत्रोक्तं नित्यादावपि शौचादेरुपाधित्वात् सोपाधिरेव संकल्पः। व्रतरूपस्तु संकल्पो निरुपाधिरित्येवं विशेषः[1], काम्यस्यापि व्रतस्यारब्धस्य[2] वचनादवश्यं समापनात्। तथापि शक्तिरुपाधिरिति चेन्न[3], सर्वसाधारणत्वात्।

[4]एवं च यदि मां पिता न निषेधति तदोपवासं करिष्ये नो चेन्नेत्याद्युपा-
5 धिसंकल्पो न व्रतं, तदा[5]तत् स्यात् यदि[6]शास्त्रीयः उपाधिः स्यात् एवं च संकल्पस्य प्रधानत्वात् [7]दुर्बलानां संकल्पमकृत्वैवोपवासाद्याचरणं क्लेशमात्रमिति [8]तस्य यस्य चारब्धव्रतस्य[9]एकभक्तादिरूपस्य अहोरात्रेणैव समाप्तिः।[10]उपवासरूपस्य पारणेन। अनुवृत्तौ प्रमाणाभावात्, तत्र तत्र पारणेन समाप्तिदर्शनाच्च। अत एव पारणान्तं [11]व्रतमिति प्रसिद्धिः।

10 एवं च पारणादिने[12] पुनर्भोजनं न विरुद्धम्।

अत एव

[13]पूर्वोक्तेन विधानेन पारणं पृषदाज्यकं
यथेष्टं च ततो रात्रौ पुनश्चैवं च सर्वदा ॥

इति [14]प्राप्तपुनर्भोजनानुवादः।

---

१ ग °परं विशेषः
२ ख ङ आरब्धस्य वचनात् नास्ति
घ आरब्धस्य नास्ति
३ ङ न नास्ति
४ क एवं च पिता मां न निषेधयिष्यति
५ क तत् नास्ति
६ क घ ङ शास्त्रीय एव
७ क घ ङ दुर्वाराणां
८ क तस्य चारब्धस्य व्रतस्य
ख ङ तस्य चारब्धस्य
९ ख घ ङ एकभुक्तादि°
१० क उपवासपारणेन, घ ङ उपवासस्य पारणेन
११ क व्रतमिति लोकप्रसिद्धः
१२ ङ °दिनेषु
१३ घ ङ यथोक्तेन
१४ क ग प्राप्त नास्ति

---

9 रघुनन्दन, एकादशीतत्त्व, पृ० १०१ पारणान्तं व्रतं ज्ञेयम्।

श्रवणद्वादश्यां हरिहरस्त्वस्माद् वाक्यादनुपारणं विना वैगुण्यमाह किं च 'सायंप्रातर्मनुष्याणामशनं देवनिर्मितमि'ति [1]प्राप्तस्य भोजनस्य निषेधको हेतुः । भविष्यपुराणे

क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहवनं सन्तोषस्तेयवर्जनम् । 5
सर्वव्रतेष्वयं धर्मः [2]सामान्यो दशधा स्मृतः ॥

क्षमा क्रोधत्यागः, सत्यं भूतहितविसंवादिपरज्ञानानुत्पादनम्, [3]दया आपद्गतोपगतरक्षा, दानं ब्राह्मणाय; सर्वत्र ब्राह्मणसम्प्रदानमन्यत्र यथोक्तादिति गौतमनिगदात्, शौचं [4]पाषण्डादिसंसर्गवर्जनं स्नाना[5]चमनादि च, इन्द्रियनिग्रहः अग्न्यवलोकनीयादिवर्जनं रिरंसादिमनोदोषवर्जनं च, देवपूजा यस्य देवस्य 10 यद् व्रतं तत्र तस्य पूजा । [6]इदं च [7]सप्तमीव्रतेषु सूर्यपूजाग्निहवनमित्युक्तं, [8]नवमीव्रतेषु दुर्गापूजाग्निहवनमित्युक्तं [9] [10]भविष्यपुराणे एव व्यक्तं सामान्यव्रते इष्टदेवतापूजाग्निहवनमपि [11]या पूज्या देवता तदुद्देशेनैव प्रक्रमात् तत्र[12] तत्र श्रवणाच्च ।

केचित्तु अग्निहवनपदाद् व्याहृतिहोममिच्छन्ति, [13]अत्र च होमे 15 यत्र द्रव्यविशेषो न विहितस्तत्राज्यं द्रव्यम् ।

---

१ ख प्राप्तव्रतस्य पुनर्भोजनस्याबाधको हेतुः, घ प्राप्तस्य पुनर्भोजनस्य
२ घ सामान्ये
३ घ दया नास्ति
४ ख घ ङ पाषण्डचाण्डालादिसंसर्ग°
५ घ आचमनानि च
६ ख ङ इदं च सूर्यपूजा अग्निहवनम् इत्युक्तं सप्तमीव्रते
७ घ सप्तमीव्रतेषु नास्ति
८ घ सप्तमीव्रते नवमीव्रतेषु
९ ग इत्युक्तकरणात्
१० क भविष्यति पुराणे
११ ख घ ङ या देवता पूज्या
१२ ख घ ङ तत्र तत्र प्रक्रमात् श्रवणाच्च
१३ घ यत्र

---

4-6 निर्णयसिन्धु, पृ० १७

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
¹मन्त्रश्च देवतायाश्च प्रजापतिरिति स्मृतिः ॥

इति परिशिष्टवचनात् संख्याया अश्रवणे ²अष्टोत्तरशतम् अष्टोत्तरसहस्रं वा ³होमः ।

⁴स्वगृह्यविधिना अग्निस्थापनादि, ⁵स्मार्त्ताग्निविधिस्तु यत्र
5 कर्मणि श्रुतस्तत्रैव निरग्निना लौकिकाग्निमुत्पाद्य होतृद्वारा स्वयं वा होमः ⁶कर्त्तव्यः, साग्निना विवाहाग्नौ, 'कर्म स्मार्त्तं विवाहाग्ना'विति याज्ञवल्क्य-वचनात् । स्मार्त्तपदात् पौराणिकं नेति चेन्न, ⁷प्रत्यक्षश्रुतिविहितहोमेतर-होमपरत्वात् । अत एवाचारप्राप्तेऽपि कर्मणि विवाहाग्निः । केचित्तु
10 गृह्यकथितकर्ममात्रपरं याज्ञवल्क्यीयं स्मार्त्तपदम् । अतः साग्निनापि ⁸स्वपरहवने व्रताङ्गहोमो लौकिकाग्निमुत्पाद्य कार्य ⁹इत्याहुः । सन्तोष ¹⁰उपपादकव्यतिरिक्तद्रव्यास्पृहा, स्तेयवर्जनम् अन्यायेन ¹¹परार्थाग्रहणम् । अत्र च देवपूजा ¹²होमदानानां क्रमेणानुष्ठानं व्रतदिने प्रधानप्रत्यासत्तेः, क्षमादीनां तु ¹³एकभक्तादारभ्य ¹⁴व्रतसमाप्तिं यावत् कर्त्तधर्मत्वात् । केचिदाहुः

१ ख ङ मन्त्रश्च देवतायाश्च प्रजापतिरिति स्मृतिः नास्ति
घ मन्त्रश्च...... स्मृतः
२ ङ अष्टोत्तरशतं सहस्रं
क ग आहुतिसंख्या
३ घ ङ चाग्निविधिना
४ ङ सौराग्नि°
५ घ ङ कार्यः
६ प्रत्यक्ष......परत्वात्
७ अत्र क ग पाठस्तु प्रामादिकः
ङ अपि नास्ति
८ ख ङ स्वरूपहवने
९ घ इत्याहुः नास्ति
१० ख घ ङ उपपादकातिरिक्त°
११ ग परस्वानाहरणम्
१२ क महादानानां
१३ ग एकभक्तादौ
१४ घ समाप्तिपर्यन्तं (व्रतसमाप्तिं यावत् स्थले)
१५

7 याज्ञवल्क्यसंहिता, १. ९७ कर्म स्मार्त्तं विवाहाग्नौ

सर्ववृतेष्विविपदं भविष्यपुराणीयवृतपरं [1]प्रकृतिवाचित्वात् । अतो [2]वृतान्तरेष्वसिद्धमेव होमादीनामङ्गत्वम् । अत एव एकादश्यादौ बहूनां होमाद्यनाचरणं सन्ध्या[3]सौरवृतादौ वानाचरणमेवेति । [4]अपरे तु येष्वेव वृतादिषु होमादिकं विहितमस्ति, तत्रैव भविष्यपुराणीयं सर्ववृतपदं संकोचनीयम् । अन्यथापि तदितरपरत्वेन [5]संकोचाभावात् मूल्यान्तरापत्तेश्च । अस्मा- 5
देववचनाद्वेदानुमानम् । विशेषवचना[6]न्यनुवादमात्रमिति चेन्न, [7]बहुवाक्य-व्यर्थत्वदोषात् तस्मात् सामान्यविशेषवचनयोरेकवाक्यतैवेत्याहुः [8]स्त्रीशूद्रादेरपि वृतेऽधिकारः विशेषाश्रवणात् । शूद्रस्तूष्णीं [9]जपन् भौमम[10]ास्ते [11]भोगवर्जित [12]इत्यादिविशेषविधेः । नरो वा यदि वा नारी इत्यादिब[13]हुशोऽभिधानात् 'वृतोपवासनियमैः शरीरोपतापनं तप' इति देवलेन [14]सामान्यधर्मतपोविधानात् 10
[15]वैश्यशूद्रयोस्त्रिरात्रपञ्चरात्रोपव[16]ासमात्रनिषेधस्य वक्ष्यमाणत्वात् । [17]न च व्याहृतिहोमाङ्गत्वपक्षे [18]तदुपसंहाराशक्तेरनधिकारः प्रतिष्ठादिक-[19]होतृद्वारासम्भवात् अथवा

---

१ घ ङ प्रकृतवाचित्वात्
२ व्रतान्तरे......अङ्गत्वम् स्थले क ग पाठः प्रमादभूयिष्ठः
३ क ग मौनव्रतादौ
४ क अपरे येष्वेव व्रतेषु होमादि°
५ क संकोचात्
६ घ ङ अनुवादकानि
७ ख बहुवाक्यव्यर्थत्वात्
८ ख घ ङ स्त्रीशूद्रयोरपि
९ घ ङ जपन्तः
१० घ ङ समाप्तेः (आस्ते स्थले)
११ घ ङ भोगविवर्जितम्
१२ घ ङ इत्यादिविशेषविधेरबोधाय
१३ ङ बहुशो विधानात्
१४ क सामान्यधर्मतया विवेचनात्
१५ घ स्त्रीशद्रयोः
१६ ङ मासमात्र°
१७ क न व्याहृति°
१८ क तदुपसंहारात्
१९ घ होतृत्वाचासम्भवात्

---

10 मुद्रितदेवलस्मृतौ नोपलभ्यते

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते।
[1]मन्त्रश्च देवतायाश्च प्रजापतिरिति स्मृतिः॥

इति परिशिष्टवचनात् संख्याया अश्रवणे [2]अष्टोत्तरशतम् अष्टोत्तरसहस्रं वा [3]होमः।

5 [4]स्वगृह्यविधिना अग्निस्थापनादि, [5]स्मार्त्ताग्निविधिस्तु यत्र कर्मणि श्रुतस्तत्रैव निरग्निना लौकिकाग्निमुत्पाद्य होतृद्वारा स्वयं वा होमः [6]कर्त्तव्यः, साग्निना विवाहाग्नौ, 'कर्म स्मार्त्तं विवाहाग्ना'विति याज्ञवल्क्य-वचनात्। स्मार्त्तपदात् पौराणिकं नेति चेन्न, [7]प्रत्यक्षश्रुतिविहितहोमेतर-होमपरत्वात्। अत एवाचारप्राप्ते[8]ऽपि कर्मणि विवाहाग्निः। केचित्तु

10 गृह्यकथितकर्ममात्रपरं याज्ञवल्क्यीयं स्मार्त्तपदम्। अतः साग्निनापि [9]स्वपरहवने व्रताङ्गहोमो लौकिकाग्निमुत्पाद्य कार्य [10]इत्याहुः। सन्तोष [11]उपपादकव्यतिरिक्तद्रव्यास्पृहा, स्तेयवर्जनम् अन्यायेन [12]परार्थाग्रहणम्। अत्र च देवपूजा [13]होमदानानां क्रमेणानुष्ठानं व्रतदिने प्रधानप्रत्यासत्तेः, क्षमादीनां तु [14]एकभक्तादारभ्य [15]व्रतसमाप्तिं यावत् कर्त्तधर्मत्वात्। केचिदाहुः

१ ख ङ मन्त्रश्च देवतायाश्च प्रजापतिरिति स्मृतिः नास्ति
घ मन्त्रश्च..... स्मृतः
२ ङ अष्टोत्तरशतं सहस्रं
३ क ग आहुतिसंख्या
४ घ ङ चाग्निविधिना
५ ङ सौराग्नि°
६ घ ङ कार्यः
७ प्रत्यक्ष......परत्वात्
अत्र क ग पाठस्तु प्रामादिकः
८ ङ अपि नास्ति
९ ख ङ स्वरूपहवने
१० घ इत्याहुः नास्ति
११ ख घ ङ उपपादकातिरिक्त°
१२ ग परस्वानाहरणम्
१३ क महादानानां
१४ ग एकभक्तादौ
१५ घ समाप्तिपर्यन्तं (व्रतसमाप्तिं यावत् स्थले)

7 याज्ञवल्क्यसंहिता, १. ९७ कर्म स्मार्त्तं विवाहाग्नौ

सर्वव्रतेष्वितिपदं भविष्यपुराणीयव्रतपरं [1]प्रकृतिवाचित्वात् । अतो [2]व्रतान्तरेष्वसिद्धमेव होमादीनामङ्गत्वम् । अत एव एकादश्यादौ बहूनां होमाद्यनाचरणं सन्ध्या[3]सौरव्रतादौ वानाचरणमेवेति । [4]अपरे तु येष्वेव व्रतादिषु होमादिकं विहितमस्ति, तत्रैव भविष्यपुराणीयं सर्वव्रतपदं संकोचनीयम् । अन्यथापि तदितरपरत्वेन [5]संकोचाभावात् मूल्यान्तरापत्तेश्च । अस्मा- 5
देववचनाद्वेदानुमानम् । विशेषवचना[6]न्यनुवादमात्रमिति चेन्न, [7]बहुवाक्य-व्यर्थत्वदोषात् तस्मात् सामान्यविशेषवचनयोरेकवाक्यतैवेत्याहुः [8]स्त्रीशूद्रादेरपि व्रतेऽधिकारः विशेषाश्रवणात् । शूद्रस्तूष्णीं [9]जपन् भौम[10]मास्ते [11]भोगवर्जित [12]इत्यादिविशेषविधेः । नरो वा यदि वा नारी इत्यादिब[13]हुशोऽभिधानात् 'व्रतोपवासनियमैः शरीरोपतापनं तप' इति देवलेन [14]सामान्यधर्मतपोविधानात् 10
[15]वैश्यशूद्रयोस्त्रिरात्रपञ्चरात्रोपवा[16]समात्रनिषेधस्य वक्ष्यमाणत्वात् । [17]न च व्याहृतिहोमाङ्गत्वपक्षे [18]तदुपसंहाराशक्तेरनधिकारः प्रतिष्ठादिक-[19]होतृद्वारासम्भवात् अथवा

---

१ घ ङ प्रकृतवाचित्वात्
२ व्रतान्तरे......अङ्गत्वम् स्थले क ग पाठः प्रमादभूयिष्ठः
३ क ग मौनव्रतादौ
४ क अपरे येष्वेव व्रतेषु होमादि°
५ क संकोचात्
६ घ ङ अनुवादकानि
७ ख बहुवाक्यव्यर्थत्वात्
८ ख घ ङ स्त्रीशूद्रयोरपि
९ घ ङ जपन्तः
१० घ ङ समाप्तेः (आस्ते स्थले)
११ घ ङ भोगविवर्जितम्
१२ घ ङ इत्यादिविशेषविधेरबोधाय
१३ ङ बहुशो विधानात्
१४ क सामान्यधर्मतया विवेचनात्
१५ घ स्त्रीशद्रयोः
१६ ङ मासमात्र°
१७ क न व्याहृति°
१८ क तदुपसंहारात्
१९ घ होतृत्वाचासम्भवात्

---

10 मुद्रितदेवलस्मृतौ नोपलभ्यते

'स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यं तथैव च' इति [1]प्रायश्चित्तव्रत-प्रक्रमस्थमपि जाबालिवचनम[2]ाचारानुग्रहात् व्रतविषयमिति स्त्रीणां [3]होमाभावात् साग्नेरप्यधिकारः

अनग्नयस्तु ये विप्रास्तेषां श्रेयोऽभि[4]धीयते ।
5 व्रतोपवासनियमै र्नानादानैस्तथा नृप ॥

इति भविष्यपुराणात् । [5]नैवमिति चेत् न दानेष्वनधिकारापत्तेः; तस्मादनग्नीनामिज्याद्यनधिकाराद् व्रतादिभिरेव श्रेय इति । तैस्तत्राधि[6]कारः कर्त्तव्य इति प्रदर्शनार्थमिदं [7]न तु [8]साग्न्यधिकारबा[9]धनार्थम् । [10]उपवासश्च साग्नेर्ब्रह्मचारिणस्तु निषिद्धः

10 अनड्वान् [11]ब्रह्मचारी च आहिताग्निश्च ते त्रयः ।
अश्नन्तः एव सिद्धन्ति नैषां सिद्धिरनश्नताम् ॥

इति स्मरणात् [12]सभर्त्तृकायास्त्रिया अपि व्रतोपवासादि

१ ख प्रायश्चित्तप्रक्रम°
२ घ ङ आचारानुरोधात्
३ घ ङ होमाभावः
४ घ ङ विधीयते (अभिधीयते स्थले)
५ क नेति चेत् (नैवमिति चेत् स्थले)
६ घ ङ अधिकारस्थान°
७ क ननु
८ ङ साग्नेरप्यत्राधिकार°
९ ख घ ङ बाधकं
१० ख घ ङ उपवासस्तु
११ ख घ ङ ब्रह्मचारिणश्च
१२ ङ सभर्त्तृकास्त्रिया

10-11 आपस्तम्बधर्मसूत्र, द्वितीय प्रश्न, नवमकण्डिका, चतुर्थपटल
पाठभेदः—आहिताग्निः (अनड्वान् स्थले) अनड्वान् (आहिताग्निः स्थले)
वासिष्ठधर्मशास्त्र, अध्याय ५, श्लोक २१, पृ:२१
निर्णयसिन्धूद्धृतदेवलवचनानुसारेण
श्लोकस्य प्रथमो भाग ईदृक्—(पृः१६)
आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः
रघुनन्दन, एकादशीतत्त्व, पृः ३५-३६ पाठभेदः—आहिताग्निस्तथैव च

पृथक् निषिद्धम्

नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं [1]नाप्युपोषणम् ।
पतिं शुश्रूषते [2]या तु तेन स्वर्गे महीयते ॥

इति मनुवचनात्

[3]पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् । 5
आयुः सा हरते [4]भर्त्तुर्नरकं चैव गच्छति ॥

इति विष्णुवचनाच्च ।

[5]भर्त्तृयुक्तत्वेन त्वविरोधः मनौ पृथङ्निषेधात्, [6]"भर्त्तुः [7]समानव्रत-चारित्वं स्त्रीधर्म' इति विष्णुवचनाच्च । तेन यथा यज्ञे पृथगनधिकारः तथा व्रतादावपीति मानवयज्ञपदेन सुतरां व्यक्तं; यत्र तु विशेषविधिस्तत्र 10 पृथगधिकारोऽपीति, केचित्तु [8]पतिशुश्रूषणाविरोधिव्रतादिकं पत्यनुमत्या पृथगपि कर्त्तव्यं मन्वादि[9]निषेध[10]स्य शुश्रूषास्ता[11]वकत्वात्,

१ ङ नाप्युपोषितं
२ घ ङ येन तेन स्वर्गं
३ ख पत्यौ ··· वचनाच्च नास्ति
४ ङ पत्युः
५ क भर्त्तृयुगलकत्वेन त्वविरोधः
ख घ ङ भर्त्तृयुगलकत्वे तु स विरोधः
६ क भर्त्तुः ········वचनाच्च स्थले पाठः प्रामादिकः
७ ख समानव्रतधारित्वम्
८ ख पतिशुश्रूषणाविरोधव्रतादिकं
९ ग शुश्रूषणा········ शुश्रूषा नास्ति
१० क निषेधः (निषेधस्य स्थले)
११ ङ भावकत्वात्

2–3 मनुसंहिता, ५· १५५ पाठभेदः—नाप्युपोषितं, येन (या तु स्थले)
5–6 विष्णुसंहिता, २५·१६ प्रथमांशे
योषिदुपवासव्रतं चरेत्
मनुविष्णुवचनद्वयं कालमाधवे (पृ० २०६) उल्लिखितम् ।
8–9 विष्णूसंहिता २५· २

कामं [1]भर्त्तुरनुज्ञाताया व्रतोपवासनियमेज्यादीनामभ्यासः स्त्रीधर्म इति शङ्खलिखितवाक्याच्चेत्याहुः । [2]इति सामान्यविधिः ।

अथोपवासविधिर्महाभारते

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
5 उपवासं तु गृह्णीयाद् यद्वा संकल्पयेद् बुधः ॥

यद्वेति पक्षान्तरम् । तेनायमर्थः—[3]ताम्रपात्राद्यभावे संकल्पमात्रमपि कर्त्तव्यं गुरुलघुप्रकारयोस्तुल्यत्वायोगात् । [4]कल्पतरौ यद्वेति नक्तादिपरमुक्तम् [5]एवं चास्य मते वाकारश्चकारार्थे तेनायमर्थः । यस्तु नक्तादिकं कर्त्तुमिच्छेत्तदपि [6]उक्तविधिनैव गृह्णीयादिति तन् मन्दम् । वाकारपदस्य [7]उपवासपदस्य च 10 वैयर्थ्यापत्तेः । यत् यत् संकल्पयेत् तत् तद् गृह्णीयादित्यनेनैव प्राप्तेः । न चोपवासपदाद् व्रतरूपताप्राप्तिः, किन्तु प्रक्रमाद् [8]व्रतधर्मत्वेन [9]ग्रहणाद् वेति उक्तैवेति । उपवासव्युत्पत्तिमुखेन कर्त्तृधर्मोपदेशो भविष्यपुराणे

---

१ क भर्त्तुरनुज्ञाता
२ ख ङ इति सामान्यविधिः नास्ति
३ ङ ताम्र इत्यादारभ्य अर्थः इति पर्यन्तं नास्ति
४ ख कल्पतरौ नक्तादिकमुक्तम्
५ ग एवं नास्ति
६ क उक्तविधिनैवोपपत्तेः (उक्त॰ ······ वैयर्थ्यापत्तेः स्थले)
७ घ पदस्य नास्ति
८ ख व्रतधर्मत्वेन इष्ठा
९ ङ ॰धर्मत्वेन दृष्टाद् ब्राह्मणात् उक्तैरिति

---

1-2 मुद्रितशङ्खलिखितसंहितायां नास्ति

4-5 कालमाधवे वराहपुराणोद्धृतवचनम् (कालमाधव, पृ॰ २१७)

पाठभेदः—वार्येव धारयेत् (संकल्पयेद् बुधः स्थले)

निर्णयसिन्धु, पृ॰ १७

रघुनन्दन, एकादशीतत्त्व, पृ॰ ८; तिथितत्त्व, पृ॰ ११०

पाठभेदः—वार्येव धारयेत् (संकल्पयेद् बुधः स्थले)

[1]उपावृत्तस्य दोषेभ्यो [2]यस्तु वासो गुणैः सह।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः॥

उपावृत्तो निवृत्तो दोषेभ्यो रागद्वेषमात्सर्यादि[3]निषिद्धात्मधर्मे[4]भ्यः, गुणैः अष्टौ [5]चात्मगुणाः

'दया भूतेषु क्षान्तिरनसूया शौचम[6]नायासमंगल्यमकार्यमस्पृहे'ति गौतमोक्तेः। सर्वभोगविवर्जितः शास्त्रानुमतगीतनृत्यादिसुखरहितः। 5

भोगविशेषान् प्रतिप्रस्तौति शातातपः

गन्धालंकारवस्त्राणि पुष्पमाल्यानुलेपनम्।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम्॥

[7]गन्धः सौरभम् अनुलेपनस्य [8]पृथगभिधानात्। 10

गौडस्मृतिः

उपवासे तथा श्राद्धे न खादेद् दन्तधावनम्।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम्॥

---

१ क उपवासस्य
२ क यस्य
३ ख आदि नास्ति
४ घ ङ उपावृत्तस्य निवृत्तस्य
५ ङ वात्मगुणाः
६ ख घ अनारतासंगमम्
७ ङ गन्धाः
८ क घ ङ पृथगुपादानात्

---

1-2 रघुनन्दन, एकादशीतत्त्व, पृ० १६, १६, २० पाठभेदः—पापेभ्यो
5 गौतमसंहिता, अध्याय ८, पृ० ४५६ पाठभेदः—
सर्वभूतेषु (भुतेषु स्थले), अनायासो (अनाग्रास स्थले)
रघुनन्दन, एकादशीतत्त्व पृ० २० पाठभेदः—सर्वभूतेषु, चेति
8-9 मुद्रितशातातपग्रन्थे नोपलभ्यते, भविष्यपुराण, १.१८४.२७ रघुनन्दन, एकादशीतत्त्व पृ०, २०-२१ पाठभेदः—°वस्तूनि, दुष्येत
12-13 नरसिंहपुराण ५८.५१ क, हारीतसंहिता, ४.१० पाठभेदः—संयोगाद्

अत्र योगीश्वरः

काष्ठसंयोगोऽत्र [1]निषिद्धः। पूर्व तु [2]पत्रादिना [3]दन्तधावनानुज्ञानाद् विरोधं परिजहार। देवलः

उपवासः प्रणश्येत दिवास्वप्नाक्षमैथुनैः।
5 अत्यये [4]चाम्बुपाने तु नोपवासः प्रणश्यति ॥

अत्यये नाशे सम्भाव्यमाने इत्यर्थः। एवं [5]चात्राचमनातिरिक्तजलपानमशास्त्रार्थः। मत्स्यपुराणे

तस्मात् कृतोपवासेन स्नानमभ्यङ्गपूर्वकम्।
वर्जनीयं महाभाग रूपघ्नं तत्परं नृप ॥

10 वृद्धशातातपः

उपवासं [6]द्विजः कृत्वा ततो ब्राह्मणभोजनम्।
कुर्यात्तेनास्य सगुण उपवासो हि जायते ॥

[7]सप्तमीद्वैधे व्यवस्थामाह भविष्यपुराणे

---

१ क निषेधः
२ क पत्रादि (पत्रादिना स्थले)
३ क दन्तधावनानुज्ञानमिति
४ क जलपाने तु
घ ङ चाम्बुपानेन
५ क एवं चाचमनातिरिक्त°
६ ग नरः
७ क सप्तमीवेध°

---

4-5 रघुनन्दन, एकादशीतत्त्व, पृ० २१ पाठभेदः—°स्वापाक्ष° चाम्बुपाने च
8-9 मत्स्यपुराण, ११५. १४ पाठभेदः-उपोषितैर्नरैस्तस्मात्, प्रयत्नेन (महाभाग स्थले)
11-12 मुद्रितशातातपग्रन्थे नोपलभ्यते

षष्ठीसमेता कर्त्तव्या सप्तमी नाष्टमीयुता।
पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥
एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः।
आराधनाय द्वादश्यां विष्णोर्यद्वदियं तथा ॥

कर्त्तव्या उपोष्या [1]पतङ्गोपासनाय [2]सूर्यपूजनाय। [3]इह षष्ठीयुतायां सप्तम्याम् इत्यर्थः।[4] [5]षष्ठ्या सप्तमीसमेतायामिति भावः। एकादश्यामित्यादि-दृष्टान्तः तत्रापि द्वैधे द्वादशीमिश्रैवैकादश्युपवासार्हा।[6] 5

एतन्मूलकान्येव

दशम्येकादशीमिश्रा[7] गान्धार्या समुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात् तां परिवर्जयेत् ॥ 10

[8]इत्यादीन्यनेकवाक्यानि। [9]किं चोदयकाले संकल्पविधानात् तस्यैव च प्रधानत्वात्तत्रैव कालादरो युक्तः इत्ययं न्यायो वचनेनैव परं

१ ख घ पतङ्गोपासनाय नास्ति
२ घ सूर्ययजनाय
३ ख घ ङ इहाष्टमीयुतायां न सप्तम्यां षष्ठ्यामिति सप्तमीसमेतायामित्यर्थः (इह········भावः स्थले)
४ घ सप्तमीव्रतेषु षष्ठीसमेता सप्तमी कर्त्तव्या इह उपोष्या सप्तमी षष्ठ्यामुपोषणमाहुर्यतः एतदेव दृष्टान्तेन एकादश्यामित्यादिः। तेन एकादशी द्वादशीमिश्रा यथोपाष्या न तु दशमीविद्धा तथा सप्तम्यपि षष्टीयुतोपोष्या नाष्टमीयुक्तेत्यर्थः इत्यधिकः पाठः
५ क षष्ठ्याम्
६ ख उपवास्या
७ ख ङ युक्ता (मिश्रा स्थले)
८ ख ङ इत्यादीन्याकरवाक्यानि
९ ग किं च नास्ति

1–2 रघुनन्दन, तिथितत्त्व, पृ० ३३, ३५, ११४
3–4 रघुनन्दन, एकादशीतत्त्व, पृ० ४७ पाठभेदः--उपोषणाय
9–10 रघुनन्दन, तिथितत्त्व, पृ० १०७, एकादशीतत्त्व, पृ० ५४,
पाठभेदः—°विद्धा (मिश्रा स्थले), गान्धारी तामुपोषिता

जीयते, [१]अतस्तिथ्यन्तरेपि[२] द्वैधे[३] सति उदयकालीनैव[४] तिथिः व्रते आदर्तुमर्हति।

किं च विहितकाले प्रारब्धकर्म कालान्तरे समाप्यते इत्यभ्युदितेष्ठावुक्तमिति [५]ततोऽपि उदयकालीनतिथ्यादरः। पठन्ति [६]च

5 'सा तिथिः सकला ज्ञेया यस्यामुदयते रविः'। यथा सम्पूर्णतिथि-ष्पवासादिकर्माङ्ग[७] तथा असम्पूर्णाप्युदयगामिनीत्यर्थः। एवं च यत्र दशमीविद्धैकादशी दिनान्तरे [८]च [९]न वर्धते तत्र दिनद्वयेऽपि प्रधानकालाभावादङ्गमात्रकालानुग्रहाय [१०]दशमीविद्धैकादशी ग्राह्या, न तु द्वादश्युपवासः प्रमाणाभावात्, वराहपुराणादौ द्वादश्युपवासश्रुति द्वादशीव्रतत्वख्यापनार्था[११]

10 [१२]उपवासनपरा वा।

१ क अतस्तिथ्यन्तरेष्वपि वैधे
ख अतस्तिथ्यन्तरेष्वपि
ङ अतस्तिथ्येस्तवेधेऽपि
घ तु ( अपि स्थले )
२ ख घ द्वैधे सवसु
३ घ ङ एव नास्ति
४ क तथापि
५ ख च नास्ति
६ क ख कर्माङ्गतया
७ ङ च नास्ति
८ घ न च वर्धते
९ ख घ ङ दशमीविद्धैव ग्राह्या
१० क ख्यापनार्थं°
११ ग उपवासपरा वा
१२

5 कालमाधव, पृ० ११७ पाठभेदः— °मस्तमितौ (°मुदयते)
7–10 द्रष्टव्यं स्कन्दपुराणीयवचनं
त्रयोदश्यां न लभ्येत द्वादशी यदि किं चन।
उपोष्यैकादशी तत्र दशमीमिश्रितापि च॥
(कालमाधव, पृ० २०६)

न त्वेवं विधे [1]द्वैधे एकादशीकार्ये द्वादशीं विधत्ते, तथा अश्रवणात्। यदि तु

एकादशीमुपवसेद् द्वादशीमथवा पुनः ।
[2]विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

इति गौड़ीयवचनं प्रमाणम्, 5

[3]तदा [4]तेनैवंविधे द्वैधे एकादशीकार्ये द्वादशीविधेर्युक्त एव द्वादश्युपवासः, न[5] चेदं व्रतान्तरमैवैकादशीसंदशपातात् [7]अपेक्षितविधेश्च।

'पक्षहानौ[8]स्थिते सोमे लङ्घयेद्दशमीयुताम्'

[9]इति [10]वाक्यमुदय[11]पूर्वकालीनदशमीयोगविषयं वचनान्तरबलादिति प्रपञ्चितं जितामित्रादिभिः। 10

---

१ ख घ ङ द्वैधे नास्ति
२ क मिश्रां वापि कुर्वीत,
  घ ङ वा प्रकुर्वीत
३ क तथा...... द्वादशीविधियुक्त
४ ङ अनेनैवं
५ घ न चेदं व्रतान्तरमेव एकावभङ्गपातात्
६ ख ङ भङ्ग°
७ ख घ ङ च अपेक्षितविधेश्च नास्ति
८ ख ङ गते
९ ख ङ इति वाक्यं द्वयम् उदय°
१० घ भविष्यपुराणीयं वचनं (वाक्यं स्थले)
११ °पूर्व° नास्ति

---

हारीतवचनं

त्रयोदश्यां यदा न[illegible] द्वादशीघटिकाद्वयम् ।
दशम्येकादशीविद्धा सैवोपोष्या सदा तिथिः ॥
(कालमाधव, पृ० २०६)

3–4 रघुनन्दन, तिथितत्त्व, पृ० १०६, एकादशीतत्त्व, पृ० ४५, ४७, ५०
पाठभेदः—वा प्रकुर्वीत

8 रघुनन्दन, एकादशीतत्त्व, पृ० ४६

जीयते, [1]अतस्तिथ्यन्तरेपि[2] द्वेधे[3] सति उदयकालीनैव[4] तिथिः वृते आदर्तुमर्हति।

किं च विहितकाले प्रारब्धकर्म कालान्तरे समाप्यते इत्यभ्युदितेष्ठावुक्तमिति [5]ततोऽपि उदयकालीनतिथ्यादरः। पठन्ति [6]च

5 'सा तिथिः सकला ज्ञेया यस्यामुदयते रविः'। यथा सम्पूर्णतिथिरुपवासादिकर्माङ्गं[7] तथा असम्पूर्णाप्युदयगामिनीत्यर्थः। एवं च यत्र दशमीविद्धैकादशी दिनान्तरे [8]च [9]न वर्धते तत्र दिनद्वयेऽपि प्रधानकालाभावादङ्गमात्रकालानुग्रहाय [10]दशमीविद्धैकादशी ग्राह्या, न तु द्वादश्युपवासः प्रमाणाभावात्, वराहपुराणादौ द्वादश्युपवासश्रुति द्वादशीव्रतत्वख्यापनार्था[11] 10 [12]उपवासनपरा वा।

---

१ क अतस्तिथ्यन्तरेष्वपि वेधे
 ख अतस्तिथ्यन्तरेष्वपि
 ङ अतस्तिथ्येस्तवेधेऽपि
२ घ तु ( अपि स्थले )
३ ख घ द्वेधे सत्सु
४ घ ङ एव नास्ति
५ क तथापि
६ ख च नास्ति
७ क ख कर्माङ्गतया
८ ङ च नास्ति
९ घ न च वर्धते
१० ख घ ङ दशमीविद्धैव ग्राह्या
११ क ख्यापनार्थ°
१२ ग उपवासपरा वा

---

5 कालमाधव, पृ० ११७ पाठभेदः— °मस्तमितौ (°मुदयते)
7–10 द्रष्टव्यं स्कन्दपुराणीयवचनं

त्रयोदश्यां न लभ्येत द्वादशी यदि किं चन।
उपोष्यैकादशी तत्र दशमीमिश्रितापि च॥
(कालमाधव, पृ० २०६)

न त्वेवं विधे [1]द्वैधे एकादशीकार्ये द्वादशीं विधत्ते, तथा अश्रवणात्। यदि तु

एकादशीमुपवसेद् द्वादशीमथवा पुनः ।
[2]विमिश्रां वापि कुर्वीत न दशम्या युतां क्वचित् ॥

इति गौड़ीयवचनं प्रमाणम्, 5

[3]तदा [4]तेनैवंविधे द्वैधे एकादशीकार्ये द्वादशीविधे युक्त एव द्वादश्युपवासः, न[5] चेदं व्रतान्तरमैवैकादशीसं[6]दशपातात् [7]अपेक्षितविधेश्च।

'पक्षहानौ[8]स्थिते सोमे लङ्घयेद्दशमीयुताम्'

[9]इति [10]वाक्यमुदय[11]पूर्वकालीनदशमीयोगविषयं वचनान्तरबलादिति प्रपञ्चितं जितामित्रादिभिः। 10

१ ख घ ङ द्वैधे नास्ति
२ क मिश्रां वापि कुर्वीत,
घ ङ वा प्रकुर्वीत
३ क तथा...... द्वादशीविधियुक्त
४ ङ अनेनैवं
५ घ न चेदं व्रतान्तरमेव एकावभङ्गपातात्
६ ख ङ भङ्ग°
७ ख घ ङ च अपेक्षितविधेश्च नास्ति
८ ख ङ गते
९ ख ङ इति वाक्यं द्वयम् उदय°
१० घ भविष्यपुराणीयं वचनं (वाक्यं स्थले)
११ °पूर्व° नास्ति

हारीतवचनं

त्रयोदश्यां यदा न स्यात् द्वादशीघटिकाद्वयम्।
दशम्येकादशीविद्धा सैवोपोष्या सदा तिथिः ॥
(कालमाधव, पृ० २०६)

3–4 रघुनन्दन, तिथितत्त्व, पृ० १०६, एकादशीतत्त्व, पृ० ४५, ४७, ५०
पाठभेदः—वा प्रकुर्वीत

8 रघुनन्दन, एकादशीतत्त्व, पृ० ४६

[1]यत्र [2]तु सम्पूर्णैकादशी दिनान्तरेऽपि [3]वर्धते तत्र द्वादशीपूजायां मुख्यप्रातःकालानुरोधायोत्तरैवोपोष्या। द्वादशीक्षये तु पूर्वैव, द्वादशीपारणा[4]-नुरोधात्।

[5]गोडास्तु

सम्पूर्णैकादशी यत्र [6]परतो यदि [7]वर्धते।
तत्रोत्तरां यतिः कुर्यात् पूर्वामुपवसेद् गृही॥

तथा द्वादश्यां पारणाभावे पूर्वामुपवसेद् गृहीति वाक्यद्वयाद् व्यवस्थामाहुः। तत्रापि सति द्वादश्यां पारणासम्भवे [8]पूर्वैव गृहिणोपोष्या।

यत्र तु पूर्वदिने [9]दशमीमिश्रा परदिने द्वादशीमिश्रा [10]दिनान्तरेऽपि द्वादशी न वर्धते, तत्रापि द्वादशीमिश्रैवोपोष्या प्रधानकालानुरोधात्। पारणादौ द्वादशीबाधः एतन्मूलकमेव गौड़ीयवचनम्

१ क अत्र
२ घ तु नास्ति
३ ग वर्त्तते
४ ख पारणानुरोधाय
घ ङ पारणबोधाय
५ ङ गौडः
६ क परतोऽपि च
७ घ त्रिवर्धते
८ क घ ङ उत्तरैव
९ ङ दशमीविद्धा
१० ग ङ दिनान्तरे च

1-3 नारद आह

सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यास्तु पारणम्॥
(कालमाधव, पृ० २००)

भृगुराह

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि॥ (कालमाधव, पृ० २०१)

एकादशी [1] दशायुक्ता परतोऽपि न वर्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

द्वादशीव्रते तु द्वादश्यां विष्णुपूजा [2] प्रधानम् एकादश्यामुपवासाङ्गमिति [3] वक्ष्यते। तत्र द्वादशीक्षये सति [4] द्वादशीविद्धैवादर्तुमर्हतीति व्यक्तमेव, तिथ्यन्तरेष्वपि गौडीयवाचनिकीमेव व्यवस्थामिच्छन्ति। यदाहुः [5] परिशिष्ट- 5
वचनम्

युग्माग्निकृतुभूतानि षण्मुन्यो र्वसुरन्ध्रयोः ।
रुद्रेण द्वादशीयुक्ता चतुर्दश्याथ पूर्णिमा ॥
प्रतिपदात्वमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद् व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥ 10

तिथ्योर्युग्ममिति सर्वत्र [6] सम्बध्यते, तेनायमर्थः- द्वितीयातृतीययोः चतुर्थीपञ्चम्योः षष्टीसप्तम्योः अष्टमीनवम्योः एकादशीद्वादश्योः चतुर्दशीपौर्णमास्योः अमावास्या-प्रतिपदोः युग्मं [7] काम्यम्। तेनैतत्संपद्यते। द्वितीया तृतीयामिश्रा स्वकार्यार्थं ग्राह्या, तृतीयापि द्वितीयामिश्रा [8] इत्येवं युगान्तरेष्व[9]पि परस्परसहिततिथिग्रहणम्। न तु [10] तिथ्यन्तरे कार्ये तिथ्यन्तरविधिः; न चायुग्माख्यस्य एकस्यैव [11] मिलितकालस्य 15

१ ख ङ द्वादशीमिश्रा (दशायुक्ता स्थले)
घ द्वादशी द्वादशीमिश्रा
२ घ विधानम्
३ ङ च (वक्ष्यते स्थले)
४ ङ दशमीविद्धैव०
५ क ङ परिशिष्टवचनं नास्ति
६ ख सम्बध्यते, तेनायमर्थः नास्ति
७ क काम्यन्ते नैतत्
ख ङ मन्यन्ते नैतत्
८ ग एवं नास्ति
९ ख ङ अपि नास्ति
१० ग तिथ्यन्तरे कार्ये नास्ति
११ ग मिलितकालविधिः
ङ मिलितस्य कालस्य विधिः

7-10 बहुत्र उद्धृतम्। कालमाधव, पृ० ८९ स्वल्पस्तु पाठभेदः
निर्णयसिन्धु, पृ० १४ बहवः पाठभेदाः
रघुनन्दन, तिथितत्त्व, पृ० ३३ पाठभेदः स्वल्पः

विधिः बाधादिदोषात् । एतद् व्यक्तमिति। [१]पूर्वोक्तयुग्मविपरीतं न कार्यम् । तेनायमर्थः, [२]द्वितीया प्रतिपन्मिश्रा तृतीया चतुर्थीमिश्रा हेया। एवमन्यत्रापि [३]युग्मे प्रथमतिथिः [४]पूर्वतिथिमिश्रा द्वितीया तिथिश्च [५]परतिथिमिश्रा हेयेति, चतुर्दशीयुक्ता[६]पूर्णिमायोगसामर्थ्याद् [७]वचनान्तराच्च कृष्णचतुर्दशी 5 त्रयोदशीमिश्रैव ग्राह्या। 'कामविद्धो हरः पूज्य' इति वाक्यात् वक्ष्यमाणवाक्याच्च, प्रतिपदपि शुक्लैव अमावास्यायोगात् द्वितीयादिद्वादशीपर्यन्ताः शुक्लाः कृष्णाश्च विशेषानुपादानात् । अयं च युग्मविधिः अहोरात्रसा[८]ध्योपवासादिकर्मणि तिथिद्वैधे [९]सति[१०]बोद्धव्यः, देवपूजादावपि दिनद्वये विहितपूर्वाह्णादि-गामितिथिलाभे सति। यदा त्वेकस्मिन्नेव [११]दिवसे विहितकाललाभस्तदा 10 तत्रैव कर्म। ननु व्यस्तनिन्दाश्रवणात्तत्रापि युग्मादरः मैवम्। दिनद्वयगामिनि विहितकाले सति सप्तम्यादिनि[१२]मित्तं कर्म सकृत् कर्त्तव्यं पूर्वस्मिन् दिने उत्तर-स्मिन्नित्यपेक्षायां तत्रैव युग्मविधिः [१३]अपेक्षितविधिबलान्नियममात्र-लाघवाच्च। [१४]तदा च व्यस्तनिन्दापि [१५]तत्रैव विधिविशेषत्वात्। एवं च [१६]वचनान्तरेषु उपवासश्रुतिरुपलक्षणम्।

---

१ ख घ पूर्वयुग्मविपरीतं तु न
२ ग द्वितीया ·····पूर्वतिथिमिश्रा नास्ति
३ घ युग्मयुग्माग्निकृतुभूतेऽपीत्यर्थः (युग्मे स्थले)
४ क पूर्वभूततिथिमिश्रा
५ क परभूततिथिश्च परभूतमिश्रा हेयेति (परतिथिमिश्रा हेयेति स्थले)
६ ग शुक्ला (युक्ता स्थले)
ङ शुक्लां
७ क वचनान्तरबलाच्च
८ ख घ साध्यो नास्ति
९ क ङ सति सर्वत्र बोद्धव्यः
१० घ सर्वबोद्धव्यः
११ ङ दिवसे नास्ति
१२ ङ निमित्तकं कर्म
१३ ग अपेक्षित......एवं च नास्ति
१४ क तदातद्व्यस्त°
१५ क ङ तत्रैव विशेषात्
१६ क वचनान्तरेषु च उपवासश्रुतिलक्षणं, च वचनान्तरेरुपवासश्रुतिरुपलक्षणम्

केचित्तु उपवासमात्र एव युग्मविधिमिच्छन्ति, [१]निषेधे तु न क्वापि युग्मविधिः अष्टम्यादौ [२]मांसनिषेधस्य [३]समस्तकालव्यापित्वेनापेक्षाविरहात्। एवं च [४]'निषिद्धे कालवर्जनम्' इति वचनं [५]न्यायमूलकमेव, तदेव युग्माग्नीत्यादिवाक्यात् दशमीत्रयोदशीकृष्णप्रतिपद्वर्जं सर्वतिथिषु व्यवस्था सिद्धा। तथा 5

षष्ठ्यष्टमी अमावास्या शुक्ला चैव चतुर्द्दशी।
एताः परयुता [६]ग्राह्याः पराः पूर्वेण संयुताः॥

पराः सप्तम्यादय एवापरयुता इति प्रकृतत्वात्। एवं [७]कृष्णत्रयोदशीसहिता कृष्णचतुर्दशी तत्सहिता च कृष्णत्रयोदशी पूज्येति सिद्धम्। तदेवं गौडीयवचनं प्रमाणयता तदनुसारेण व्यवस्थोक्ता। 10

भूपालादिमते तु सप्तम्येकादश्योर्वाचनिकी व्यवस्था तिथ्यन्तरेषु तु प्रधानकालानुरोधरूपन्यायादुदयका[८]लव्यापितिथ्यादर इति प्रागेव दर्शितम्, एवं च,

व्रतोपवासनियमे घटिकैकापि या भवेत्।
सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकीति 15

---

१ ख घ ङ निषेधेषु निन्दायामपि न युग्मविधिः
२ घ मांसविधेर्निषेधस्य
३ ङ समस्तकालव्यापिवेलाकाङ्क्षाविरहात्
४ ख निषिद्धकालवर्जनम्
५ ख ङ न्यायमूलमेव
६ ख घ ङ कार्याः
७ ग कृष्णत्रयोदशीसहिता नास्ति
८ क कालव्यापिन्यादर

---

6–7 कालमाधव, पृः ९०, निर्णयसिन्धुः, पृ १४
पाठभेदः—कृष्णपक्षे त्रयोदशी (शुक्ला चैव चतुर्द्दशी स्थले), पूज्याः (ग्राह्याः स्थले)

14–15 रघुनन्दन, तिथितत्त्व, पृः ५ पाठभेदः-°स्नानादौ (°नियमे स्थले), घटिकैका यदा भवेत्

गौडीयवचनं न्यायमूलमेव, नक्षत्रेष्वपि द्वैधे सति [1]उदयकालव्यापि-नक्षत्रादरः, [2]न्यायस्य तुल्यत्वात्।

ननु सप्तमीमुपवसेदिति विधिः तिथिद्वैधे [3]सति न संभवत्येव, [4]अहोरात्राभोजनरूप[5]स्योपवासस्य सप्तम्यां [6]कर्त्तुमशक्तेः। तिथ्यन्तरसहकारि-
5 तया [7]उपपत्तिरिति चेन्न, नैरपेक्षबाधापत्तेः। मैवम्, अहोरात्रावच्छेदेनैव सप्तम्याद्यन्वयात्। [8]अहोरात्राभोजनरूपेणोपवासेनाहोरात्रानपेक्षसप्तमीविधिः संभवति। किन्त्वहोरात्रावच्छेदकत्वेनैव। तदेवं यस्मिन्नहोरात्रे [10]वैध-सप्तमीयोग[11]स्तत्र न भुञ्जीतेति सप्तमीमुपवसेदिति [12]वाक्यार्थः। न तु सम्पूर्णसप्तमीयोगो [13]विवक्षणीयः, तस्माद् द्वैधेऽपि सप्तमीमुपवसेदिति विधौ
10 व्यवस्थाबोधकव[14]चनावकाशोऽस्ति। किं च प्रायशः संवत्सरव्रतस्यैव विधानात् तत्र चैकदेशद्वाराप्यवच्छेदकत्वस्यावश्यकत्वात् अन्यत्रापि तथैव व्यवस्थाबोधकवाक्यादेव चैकदेशद्वारावच्छेदः। न चैवं रात्रादावपि द्वैधे [15]व्यवस्थाबोधकवाक्यापत्तिः, यतो रात्रिनिषिद्धे देवपूजादावपि उक्तस्य [16]व्यवस्थापकवचनस्यानुरोधाद् दिवातनविधिविषयतयैव, लोकेऽपि

---

१ क ग उदयकालगामि°
२ ग न्यायतुल्यत्वात्
३ ग सति नास्ति
४ ग अहोरात्रा.......अन्वयात् (6) नास्ति।
५ ख घ रूपस्य नास्ति
६ क वक्तुमशक्तेः
७ घ अनुपपत्ति°
८ ख घ अहोरात्राभोजनरूपेषूपवासेषु
९ क ख घ अहोरात्रावच्छेदेनैव
१० ङ वैध नास्ति
११ घ ङ तस्मिन् (तत्र स्थले)
१२ ग वाक्यार्थः...........वसेत् नास्ति
१३ घ ङ अपेक्षणीयः
१४ ग वचनादवकाशोऽस्ति
१५ घ व्यवस्थाबोधकवचनप्रत्यासत्तिः
क व्यवस्थापकवचनप्रत्यापत्तिः
१६ क व्यवस्थावचनस्य

दिवातननानातिथियोग एव [2]व्यवहारः, रात्रिमात्रकालिने तु नक्तादौ रात्रिमात्रयोगोऽप्यादरणीयः। [3]पठन्ति च

नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यत इति।

अथ नक्तविधिः।

तत्र भविष्यपुराणे 5

हविष्यभोजनं [4]स्नानं सत्यमाहारलाघवम्।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत्॥

[5]हविष्यं यवाः, तदभावे व्रीहयः, तदभावे माषकोद्रवचणकगौरसर्षपम[6]सूरचीनककुलत्थवर्जमन्यदप्यन्नम्। सै[7]न्धवं मानससंभवं लवणं मानससंभवं साभरिजातिप्रसिद्ध[8]मित्याहुः। गव्यं पयो दधि घृतं च। 'क्षमा सत्यमि'त्यादिना [9]व्रत[10]मात्रधर्मत्वेन सत्यस्योक्तेऽपि पुनर्नक्त[11]धर्मत्वाभिधानमादरातिशयार्थम्। एवमग्निकार्यस्यापि अग्निहवनपदेन [12]विहितस्य 10

१ क या (नाना स्थले)
२ घ वैधव्यवहारः
३ ख घ यद् वक्ति (पठन्ति च स्थले)
४ ङ स्नानं नास्ति
५ ख हविष्ये
६ ख मसूर नास्ति
७ ख घ ङ सैन्धवं मानसमपि
८ ङ इत्याहुः नास्ति
९ क व्रतमात्रधर्मत्वे
१० ख घ मात्र नास्ति
११ ग °धर्माभिधानम्
१२ ङ विहितस्येति

6–7 निर्णयसिन्धु, पृः १६
रघुनन्दन, एकादशीतत्त्व, पृः ६३ पाठभेदः-सदाचरेत्
देवीपुराण, ७८.५ पाठभेदः—अयःशय्या (अधःशय्या स्थले),
समाहरेत् (षडाचरेत् स्थले)

बोद्धव्यम्। अथवा अग्निकार्यमत्र व्याहृतिहोमः। 'न [1]व्याहृतिहोमेभ्यः[2] परं होम' इति शङ्खेन [3]सामान्यतोऽभिधानात्[4] देवपूजाग्निहवनमिति श्रवणात् व्रतपूज्यदेवतामुद्दिश्यैव होमः [5]प्रक्रमादिति दर्शितं प्राक्। अधःशय्यामिति खट्वादिव्यावृत्त्यर्थं न तु भूमिशयनार्थमेव अनौचित्वात्। अत्र [6]केचिद्
5 नक्तभोजी षडाचरेत् इत्यभिधानात् [7]नक्तव्रतेषु षडेव धर्माः इतरत्र तु [8]प्रागुक्तदशधर्माः, अत एव सत्यहोमयोः पुनरुपादानं षड्प्रवेशनार्थमुक्तमित्याहुः।

[9]मुहूर्त्तोनं दिनं केचित् प्रवदन्ति मनीषिणः।
नक्षत्रदर्शनान्नक्तमहं[10] मन्ये जनाधिप॥

मुहूर्त्तः अह्नः पञ्चदशो भागः 'अह्नो मुहूर्त्ता विख्याता दश पञ्च च
10 सर्वदा' इति मत्स्यपुराणात्। नरसिंहपुराणे

आत्मद्विगुणच्छायायां यदा सन्तिष्ठते रविः।
सौरं नक्तं विजानीयान्न नक्तं निशिभोजनम्॥

---

१ ङ व्याहृतिभ्यः
२ न व्याहृतिहोमेभ्यः परं होमः इतस्मादारभ्य परपृष्ठायां योजनीयमित्याहुः (8) प्री इति पर्यन्तं घ पुस्तके नास्ति
३ ङ तत्र तु अधिकः पाठः
४ क विधानात् (अभिधानात् स्थले)
५ क क्रमादिति
६ ख ङ केचिद् नास्ति
७ क ङ नक्तव्रते
८ ङ उक्त° नास्ति
९ ङ नक्षत्रदर्शनान्नक्तं ( मुहूर्त्तोनं……केचित् स्थले )
१० ङ अहं नास्ति

---

7-8 निर्णयसिन्धु, पृः १५ पाठभेदः—नक्तं ( केचित् स्थले ), गणाधिप (जनाधिप स्थले)

9-10 मत्स्यपुराण, २२. ८४ क

11 12 नरसिंहपुराण, ७६.९ पाठभेदः—आत्मनो द्विगुणां छायां, सौरनक्तं (सौरं नक्तं स्थले)

प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते।
आत्मनो द्विगुणा छाया मन्दीभवति भास्करे॥ (निर्णयसिन्धु, पृः १५)

आत्मद्विगुणच्छायायामिति [1]पूर्वार्धविधिनिर्देशः। तेनार्धं दिवैवभोजनं न नक्तमित्यादिना निशानिषेधात्। मुहूर्त्तोनं दिनमिति पूर्वोक्तमिति एतत् कालोपलक्षणम्। अतः प्रातस्तनात्मद्विगुणच्छायोत्तरं [2]भोजनशङ्का हेया। एवं चैतद्दर्शनात् सौरव्रतेतरव्रतेषु 'नक्षत्रदर्शनान्नक्[3]तमि'ति भविष्यपुराणीयं व्यवस्थापनीयम् सामान्यविशेषन्यायात्। सौरव्रते तु यत्र विशेषविधिस्तत्रैव परं 5 नक्षत्रदर्शनान्नक्तमि[4]ति। अन्ये तु भविष्यपुराणे 'अहं मन्ये' इत्यभिधानात् सौरव्रतेऽपि तत् कथिते नक्षत्रदर्शना[5]देव नक्तमितरत्र सौरव्रते 'आत्मद्विगुणच्छायायामि'ति नरसिंहपुराणीयं योजनीयमित्याहुः।

[6]भविष्ये

उपवासात् परं भैक्षं भैक्षात् परमयाचितम्। 10
अयाचितात् परं नक्तं तस्मान्नक्तेन वर्त्तयेत्॥

[7]उपवासात् परं श्रेष्टम् अल्पायासेन [8]तत्फलदत्वात् [9]तच्चोपवासासामर्थ्ये अन्यथाविरोधात्, 'भैक्षात् परमया[10]चितमि'त्यादौ परं पद मुख्यतया श्रेष्ठत्वमाह। तेनायमर्थः—आरब्धसंवत्सरव्रतादौ [11]उपवासासामर्थ्ये नक्तं

१ ख पूर्वविधिनिर्देशः
२ ख ङ न भोजनशङ्का
३ नक्तमिति अस्मात् आरम्य परपृष्ठायाम् अन्तिमपङ्क्तौ सूत्रद्वयात् पर्यन्तं ग पुस्तके अत्र नास्ति ( द्रष्टव्यं ग पृ० ३१-३२ ), अन्यत्र द्रष्टव्यम् ( पृ० ४१ )
४ ख ङ इति नास्ति
५ ख ङ एव नास्ति
६ ङ भविष्यपुराणे
७ ङ उपवासात् नास्ति
८ ख ङ तत्फलजनकत्वात्
९ क ङ तच्चोपवासासामर्थ्ये सति
१० क अयाचितं नास्ति
११ ङ उपवासासामर्थ्ये सति

10-11 देवीपुराण, ७८.३ पाठभेदः—भैक्ष्यं, भैक्ष्यात्

तदसामर्थ्ये अयाचितं तदसामर्थ्ये भैक्षम् एषामप्यतुल्यक्लेशानां तुल्यवद्-विध्यसम्भवात् एतन्मूलकमेव

[1]एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन भैक्षेण नैवाद्वादशिको भवेदिति

5 [2]अनाकरवचनं, केचित्तु नक्तेन वर्त्तयेदिति विधिः शेषमर्थवाद-मात्रमुप[3]वासात् परमित्यादीत्याहुः। तन्न, विधायकत्वसं[4]भवे स्तावक-त्वस्यान्याय्यत्वात्। एवं चोक्तविधिविषया यदैकवाक्यत्वं संभवति [5]तदा वाक्यमपि भिन्नम्। न तु व्यर्थत्वं, पुंवाक्ये महान् दोषः। अत्र च सर्वत्र माघादि[6]मासोल्लिखितव्रतादौ शुक्लप्रतिपदादिरे[7]वामावास्यान्तश्चान्द्रो मासः

10 ज्योतिःशास्त्रात्,

इन्द्राग्नी यत्र हूयेते मासादिः [8]स प्रकीर्त्तितः।
[9]अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥

इति वाक्याच्च। [10]अत एव तत्र तत्र शुक्लपक्षकृत्यमुक्त्वा कृष्णपक्षकृत्याभिधानम्। वाराहपुराणादौ पञ्चनारदीयेऽपि 'नक्षत्रेण युक्तः कालः यस्मिन् पौर्णमासी'ति

15 [11]संज्ञायामिति सूत्रद्वयात् मघादियोगयोग्यपौर्णमासशालिनि शुक्लप्रतिपदाद्य-

---

१ ङ एकभुक्तेन
२ ख आकरवचनात्
  ङ अनाकरवचनात्
३ ख ङ उपवासात् परमित्यादि नास्ति
४ ङ °सभवे सति
५ ख इति चेत् तदा
६ ख मासोल्लेखि°
७ एव नास्ति
८ क संप्रकीर्त्तितः
९ क ख ङ अग्निषौमौ.... ..पितृसोमकौ नास्ति
१० ङ अत एव तत्र शुक्ल°
११ ख ग संज्ञायां नास्ति

---

3–4 रघुनन्दन, एकादशीतत्त्व, पृः ७ पाठभेदः—चैकेन (भैक्षेण स्थले) पादकृच्छ्र उदाहृतः (नैवा........भवेत् स्थले)

11–12 रघुनन्दन, मलमासतत्त्व, पृ० ७३८ लघुहारीतोद्धृतं वचनम्

मावास्यान्ते मासे चान्द्र एव माघादिपदमुख्यत्वमुक्तम्[1]। एवं च [2]विवाहादौ [3]सौरो मासोः ग्राह्यः प्रमाणान्तरात्।

यथा

अमावास्यायां तु देवाः कार्त्तिके मासि केशवात्।
शाकं च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत्॥ 5

'अश्वयुक् कृष्णपक्षे [4]तु श्राद्धं देयं दिने दिने' इत्यादौ कृष्णपक्षादिलौकिकमासग्रहणं विशेषश्रवणात्। तदन्यत्रोक्तशुक्लादिचान्द्रमासग्रहः, तस्य लक्षणम्। मकरस्यादित्ये[5] यस्यारम्भः स माघः, एवं [6]कुम्भस्यादित्यारम्भ इत्यादिः फाल्गुनादिः। अत एवाधिमासपाते[7] द्विराषाढ़ादिव्यवहारः अधिकमासेऽपि उक्ताषाढ़ादिलक्षणसत्वात्। एवमारब्धसंवत्सरव्रतादावधिमासपाते[8] एकस्य 10 मासस्य कृत्यमावर्त्तते, त्रयोदशमासात्मकश्च सवंत्सरः [9]द्वादशमासात्मकत्वं संवत्सरस्यौत्सर्गिकम्। तथा च श्रुतिः।

'द्वादशमासाः संवत्सरः त्रयोदशमासाः संवत्सर' इति। एवं च यत्र संवत्सरव्रते द्वादशमासोल्लेखेन [10]व्रतादिकथनं तत्र [11]द्वादशत्वमुपलक्षणम्, [12]अथवा आषाढ़ादित्वेन रूपेण एकतां कृत्वा द्वादशत्वमधिमासपातेऽपि, अधिमासे 15 सति षष्ठिदिवसावच्छिन्न एव मासश्चान्द्रः। अधिमासे वैदिककर्मनिषेधात् कथं

१ ख ङ मुख्यत्वं नास्ति
२ ख विवाहकरणादौ (विवाहादौ स्थले)
३ ख ङ सोरमासपरिग्रहः
४ ख ङ तु ......दिने दिने नास्ति
५ क ङ आदित्यावच्छिन्ने
६ क ङ कुम्भस्यादित्यादिना अत एवाधिमासपाते
७ क अधिमासपातेऽपि
८ क ङ पातेऽपि
९ ख द्वादशमासत्वम्
१० क स्नानादिविशेषकथनम्
११ ख ङ द्वादशश्रुतिरुपलक्षणम्
१२ क ङ अथवा नास्ति

18 कालमाधव, पृ० ३६

[१]तत्र व्रतकरणमिति चेन्न,

[२]नित्ये नैमित्तिके कुर्यात् प्रयतः सन् मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥

इति [३]वृहस्पतिव[४]चनेन प्रतिप्रसवात् काम्यस्य व्रतस्य नित्यादौ नान्तर्भाव
5 इति चेन्न, नित्यत्वं [५]ह्यवश्यकर्त्तव्यत्वं, तत्र काम्यव्रतस्यारब्धस्य इति दर्शितं प्राक्। अत्र नैमित्तिकपदेनैकोद्दिष्टमुच्यते प्रेतश्राद्धपदे वैकल्पादित्युक्तं श्राद्धाध्याये। अतः सपिण्डीकरणोत्तरं [६]सांवत्सरिकं श्राद्धं मलिम्लुचे न कर्त्तव्यं। तदुक्तम्—

[७]प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः ।
10 क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

[८]आद्यं मुक्त्वा तु वत्सरमिति आद्ये संवत्सरे यदि [९]द्वादश एव मासो मलिम्लुचस्तदा तत्रैव वार्षिकं श्राद्धं न त्रयोदशमास इति तात्पर्यार्थः।

तदुक्तं

असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः।
15 तथैव मासिकं पूर्वं सपिण्डीकरणं तथा ॥

---

१ क तत्र नास्ति
२ ङ नित्यनैमित्तिके
३ ख ङ वृहस्पतिना
४ क वचन°
५ क ख ह्यावश्यकत्वम्
६ ख ङ सांवत्सरिकक्षयमाह
७ क प्रत्यब्दं कार्त्तिके मासि कार्यं सांवत्सरं द्विजैः
८ ङ आद्यं......इति नास्ति
९ क द्वादशमास इति तात्पर्यार्थः (द्वादश......तात्पर्यार्थः स्थले)

---

2-3 रघुनन्दन, मलमासतत्त्व, पृ० ७८८, ७९७ पाठभेदः-नित्यं (नित्ये स्थले)
9-10 रघुनन्दन, मलमासतत्त्व, पृ० ८५० लघुहारीतोद्धृतं वचनम्। पाठभेदः-प्रेतक्रिया
14-15 रघुनन्दन मलमासतत्त्व, पृ० ८४८, ८५० लघुहारीतोद्धृतं वचनम्

इति असंक्रान्ते सूर्यसंक्रान्तिशून्ये शुक्लप्रतिपदादिचान्द्रमासे, इदमेव मलिम्लुच-लक्षणम्, द्वादशमासाधिमासत्वपक्ष[1] एव ।

संवत्सरातिरेको वै[2] मासश्चैव त्रयोदश ।
तस्मात् त्रयोदशे [3]श्राद्धं न दद्यान्नोपतिष्ठत ॥ इति

[4]देवलवचनं वेदितव्यम् । यदि तु द्वादशमासादन्योऽधिमासः संवत्सराभ्यन्तरे, तदा त्रयोदशमासिकानि भवन्ति । [5]यदा संवत्सराभ्यन्तरे अधिमासः स्यात्तदा मासिकार्थं दिनमेकं वर्धयेदिति विष्णुवचनात् । न तु वर्धयेच्छेदयेत्तद्धारयेदिति कुव्याख्यानमादरणीयम् ।

चक्रवत् परिवर्त्तते सूर्यः कालवशाद् यतः ।
अतः सांवत्सरं [6]श्राद्धं कर्त्तव्यं [7]मासचिह्नितम् ।
मासचिह्नं तु कर्त्तव्यं पौषमाघाद्यमेव हि ॥

इति [8]मासोचितविधिबाधापत्तेः । न च मलिम्लुचे श्राद्धकरणात् मासचिह्नितविध्यनुपपत्तिः । तथैव मासिकमिति प्रेतश्राद्धं तथैव च इति मलिम्लुचकर्त्तव्यताबोधकवचनद्वयविरोधापत्तेः । अत्र च चक्रवदित्यादिना [9]सौरमासं निराकृत्य पौषादिमासकर्त्तव्यताबोधने न चान्द्रमासप्रयोजकत्वं सांवत्सरिकश्राद्धे[10] दर्शितम् । [11]एवं चासंक्रान्तेऽपि

१ ग मासाधि नास्ति
२ ख वा
३ क मासि
४ क ख देवल नास्ति
५ ङ यदि
६ क मासं
७ क कालचिह्नितम्
८ क ख मासचिह्नित इति बाधापत्तेः
ङ मासचिह्नितविधिबाधापत्तेः
९ क सौरमासमेव मासो मलिम्लुचः
तदा तत्रैव वार्षिकं श्राद्धं न त्रयोदश अधिकः पाठः
१० ख श्राद्धं
११ ख एवं चात्रापि

9-11 रघुनन्दन, मलमासतत्त्व, पृः ७५९ ७६० पाठभेदः—परिवर्त्तत

चान्द्रमासे पौषादिपदं व्यक्तं वचनान्तरादपि मलिम्लुचे मासि सपिण्डीकरणम्।
तदाह

गर्भे वार्द्धुषि कृत्ये च मृतानां पिण्डकर्मसु ।
सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ॥

5　गर्भे गर्भाधाना[1]दिकर्मणि [2]अन्यत्रापि [3]नियतकालिने कर्मणि। पिण्डकर्मसु दाशाहिकेषु । मृतानामिति यदा नवनीतघृतवदचिरत्वप्राप्तेः, ननु [4]यदि विष्णुवचनान्मा[5]सचिह्नितविधिसहितात् त्रयोदशमासिकानि, तदा प्रेतश्राद्धे सप्तदशत्वापत्तिः षोडशत्वबाधादिदोषापत्तिः न नैमित्तिकात् सप्तदशत्वस्य न नित्यस्य बाधो दोषः, [6]फलचमस-
10　न्यायेनैव [7]मासस्य पूर्वोक्तरीत्या वा आषाढत्वादिना मासस्यैक्ये[8]तदवच्छेदे श्राद्धद्वयैक्यात् [9]षोडशश्राद्धापत्तिरित्यलं प्रसक्तानुप्रसक्तविस्तर[10]ः । अत्र च संवत्सरव्रतादौ सकृदेव संकल्पकरणम्, आवृत्तौ प्रमाणाभावात्, विरोधाच्च। एवं च [11]संवत्सरव्रतादौ कृतसंकल्पस्य प्रत्येकादश्युपवासाद्याचरणम्, एवं यावज्जीवव्रतेऽपि ।

15　अथ गणेशव्रतानि ।

तत्र वाराहपुराणे

अथाविघ्नव्रतं राजन् कथयामि शृणुष्व तत् ।
चतुर्थ्यां फाल्गुने मासि गृहीतव्यं व्रतं त्विदम् ॥

---

१ ङ आदि नास्ति
२ ग अत्रापि
३ ख नियतकालिने पिण्डकर्मसु
४ क ग यदि नास्ति
५ क मासचिह्नविधि°
६ क घ ङ फलचमसेनैव
७ ङ सोमस्य
८ क तदवच्छेदात्, ङ तदवच्छेदेन
९ ङ षोडशोपपत्तिः
१० ङ विस्तरेण
११ ङ संवत्सरादौ

---

3-4 रघुनन्दन, मलमासतत्त्व, पृः ८५० पाठभेदः—प्रचक्षते (विदुर्बुधाः स्थले)
17-2 (पृ० ९१) भविष्यपुराण, ५. ३३. १–३ वहवः पाठभेदाः
17-6 (पृ० ९१) वराहपुराण, ५९. १—५ क बहवः पाठभेदाः

नक्ताहारेण राजेन्द्र तिलान्नं [1]पारणं स्मृतम्।
[2]तदेवाग्नौ होतव्यं तद्देयं ब्राह्मणेषु च ॥
चातुर्मास्यं व्रतं चैव कृत्वा वै पञ्चमे तथा।
सौवर्णं गजवक्त्रं तु कृत्वा विप्राय दापयेत् ॥
आयसैः पञ्चभिः पात्रैरुपेतं सतिलैस्तथा । 5
एवं कृत्वा वृतं चैतत् सर्वविघ्नैः प्रमुच्यते ॥

तथा—

दिव्याय शूराय गजाननाय
लम्बोदरायैकरदायुधाय ।
नगात्मजादेहसमुद्भवाय 10
कुठारहस्ताय नमो वराय ॥
एवं प्रपूज्य स्तुतिभिः पुनश्च
होमं कुर्याद्विघ्न[3]विनाशहेतोः ।
एवं कृते यान्ति विनाशमाशु
विघ्नाश्च[4]कार्याणि च यान्ति सिद्धिम् ॥ 15

अत्र च फाल्गुनादिमासचतुष्टये गणेशं संपूज्य [5]दिव्यायेत्यनेन स्तुत्वा अनेनैव स्वाहान्तेन तिलान्नं हुत्वा ब्राह्मणेभ्यश्च दत्वा तदेव नक्तमश्नीयात् । आषाढ़शुक्लचतुर्थ्यां तु सौवर्णविनायकदानमात्रं न नक्तमिति प्रयोगः । केचित्तु पुनश्च होममिति पुनरर्थस्य [6]होमान्तरापेक्षास्वरसात् प्रतीतपूर्वकथित-तिलान्नहोमात् होमान्तरविधिमिच्छन्ति, तन्न, निरूपतया पूर्वप्रतीतहोम- 20

१ क पारणे
२ घ देवे चाग्नौ च होतव्यं
३ ग विघ्ननाशस्य हेतोः
४ क कर्माणि च
५ ख दिव्यायेति स्तुत्वा
६ ङ होमान्तरापेक्षयास्वरसात्

8-15 भविष्यपुराण ४.३३.४

प्रत्यभिज्ञानात् पुनःशब्दश्च[1] क्रियान्तरापेक्षयाप्यनुवादः[2] । अतः क्रमार्था पुनःश्रुतिः इत्यविघ्नव्रतमिदम्[3] ।

भविष्यपुराणे

चतुर्थ्यां तु [4]महाराज निराहारो वृतान्वितः ।
दत्वा तिलान्नं विप्राय स्वयं भुङ्क्ते तिलोदनम् ॥
वर्षद्वये [5]समाप्तिर्हि वृतेषु तु यदा भवेत् ॥
[6]विनायकस्तस्य तुष्टो ददाति फलमीहितम् ॥

इति विनायकचतुर्थीवृतम् ॥

मत्स्यपुराणे

चतुर्थ्यां नक्तभुग् दद्याद् व्रतान्ते हेमवारणम् ।
वृतं वैनायकं नाम [7]शिवलोकफलप्रदम् ॥

इदं वृतद्वयमुभयचतुर्थ्यां विशेषानभिधानात्, [8]आवृत्तेरावश्यकत्वात्, [9]पूर्वत्र फाल्गुनादिमास[10]क्रमावृत्तिप्रसङ्गात् । फाल्गुनाद्यवच्छेदेन चतुर्थ्यामित्येक[11]वचनस्यानुरोद्धुं शक्यत्वाच्च । शुक्लचतुर्थी[12]मात्रे वृतकरणमिति

---

१ ग पुनःशब्दात् परं कर्मान्तरापेक्षया अधिकः पाठः
२ क अनुवादकः
३ ख ङ इदम् नास्ति
४ ङ यदा राजन्
५ ख ङ समाप्तिस्तु
६ ख ङ विनायकस्ततस्तुष्टो
७ ङ शिवलोके
८ ख आवृत्तेश्चावश्यकत्वात्
९ क पूर्वत्र च
१० क °कृत्या° (क्रमा स्थले)
११ ख ङ वचनस्य नास्ति
१२ ख ङ मात्रे नास्ति

---

4-7 भविष्यपुराण, १. २२. १४ बह्वः पाठभेदाः
10-11 मत्स्यपुराण, १०१. ६१. पाठभेदः—अब्दान्ते (वृतान्ते स्थले)

विशेषः । एवमन्यत्रापि यत्र मासावच्छेदेन तिथेरेकत्वं श्रूयते तत्र [१]शुक्लतिथि-मात्रग्रहणं [२]शुक्लादिमासग्रहणस्य पूर्वमुक्तत्वात्, प्रथमपरित्यागे कारणाभावात् । किं च मासे प्रतियोगिनि उपान्ते तदायमेव चतुर्थीत्वादिः प्रतीयते । [३]न परपेक्षापक्षमिति शुक्लमात्रग्रहणं मासानुपादाने तु लौकिकप्रयोग-बाहुल्यात् पक्षापेक्षमेव, [४]चतुर्थ्यादिग्रहणं पूरणप्रत्ययान्तम् इति संवत्सरव्रतादौ संकल्पे [५]पक्षापेक्षं तिथिग्रहणमिति विवेक्तव्यम् । 5

अथ सूर्यव्रतानि ।

तत्र भविष्ये

यस्त्वादित्यदिने भक्त्या भानुं सम्पूज्य [६]श्रद्धया ।
नक्तं करोति पुरुषः स यात्यमरलोकताम् ॥ 10

इदं व्रतं दिनैकसमाप्यमेव [७]आवृत्तौ प्रमाणाभावात् । संवत्सराद्यवच्छेदश्रवणे तु अर्थादावृत्तिः, यत्र तु सर्वथा कालावच्छेदो न श्रुतः, तत्र यावज्जीवं कर्त्तव्यं [८]जीवनेनैवार्थादवच्छेदात् ।

आदित्य उवाच

यो[९]ऽब्दमेकं प्रकुर्वीत नक्तं मम दिने नरः । 15
ब्रह्मचारी जितक्रोधो ममार्चनपरः खग ॥

---

१ ग शुक्लमात्रग्रहणं, ङ श्रुतिमात्रग्रहणं
२ ग शुक्लादि……पूर्वमुक्तत्वात् नास्ति
३ क न पक्षमिति, ङ न पक्षापेक्षमिति
४ ङ चतुर्थ्यादिपदं शुक्लप्रत्ययान्तम्
५ ङ सकलपक्षम्
६ ग यत्नतः
७ घ अनुवृत्तौ
८ क जीवनेनैवार्थविच्छेदाभावात्
९ ङ क्षब्दात्मकं

---

9-10 भविष्यपुराण, १.२०७.१२ पाठभेदः—प्राप्ते सूर्यदिने (यस्त्वादित्यदिने स्थले)

संवत्सरान्ते मद्भक्तान् सामगांश्चैव वै द्विजान्
पूजयित्वा ततो ब्रूयात् प्रीयतां मे दिवाकरः ॥
एवं भक्तिसमायुक्तो मम लोकं [1]स गच्छति ।
न च [2]मानुषकं लोकमध्रुवं प्राप्नुते नरः ॥

5 [3]तथा

उपवासं [4]तु कुर्वन्ति [5]ये त्वादित्यदिने तदा ।
जयन्ति च महाश्वेतां भजन्ते ते यथेप्सितान् ॥

महाश्वेतां ह्रां ह्रीं स इति मन्त्रः सूर्यपूजायां भविष्यपुराणे एव व्यक्तः । तथा–

10 रविसंक्रमणे यः स्याद्रवेर्वारो गणाधिप ।
स ज्ञेयो हृदयो नाम आदित्यहृदयप्रियः ॥
तत्र नक्तं समाश्रित्य देवं संपूज्य यत्नतः ।
[6]गत्वा चायतनं भानोरादित्याभिमुखः स्थितः ॥
जयेदादित्यहृदयं संख्यायाष्टशतं बुधः ।
15 अथवास्तमयं यावद्[7]भास्करं चिन्तयेद् हृदि ॥
गृहमेत्य ततो विप्रान् भोजयेच्छक्तितः [8]शिव ।
भुक्त्वा तु पायसं चैव ततो भूमौ स्वपेद् बुधः ॥

---

१ ग प्रपद्यते
२ ख ग ङ मानुष्यकं
३ ख तथा नास्ति
४ ङ प्रकुर्वन्ति
५ ख ङ ये चार्कस्य दिने सदा
६ क गत्वा······संख्यायाष्टशतं बुधः नास्ति
७ क भास्वरं
८ ग खग

---

6-7 रघुनन्दन, एकादशीतत्त्व, पृ० ४० पाठभेदः—[?]च ये कुर्युः ( तु कुर्वन्ति स्थले), आदित्यस्य दिने तथा, जयन्ति (जपन्ति स्थले), ते लभन्ते यथेप्सितम्

याऽत्र सम्पूजयेद् भानुं भक्त्या श्रद्धासमन्वितः ।
स कामान् लभते दिव्यान् भास्करं हृदयेप्सितान् ॥

[१]नक्तं समाश्रित्य नक्तं चरिष्यामीति संकल्पः आदित्यहृदयं घृणिः सूर्य आदित्य ओम् इति मन्त्रः। अथवेति जपेन सह विकल्पार्थम्। भान्वायतनगमनं तूभयपक्षेऽपि, गृहमेत्येत्यग्रेऽ[२]विशेषितोऽभिधानात्। 5
ब्राह्मणभोजनेऽपि पायसमेव [३]शेष[४]भक्षणस्यैव शास्त्रार्थत्वात् भूमौ कम्बलास्तृताया[५]मित्यौचित्यात् ।

नरसिंहपुराणे

हस्तयुक्ते [६]सौरदिने सौरनक्तं विधीयते ।
[७]स्नात्वार्कमभ्यर्च्य विष्णुं नीरुजो जीवते चिरम् ॥ 10

सौरनक्तमात्मद्विगुणच्छायायामनेनैव [८]प्रागुक्तम् ।

भविष्यपुराणे

पुष्णोर्वारे यदा ऋक्षं भवेद् वै भगदैवतं ।
स वारो [९]रोगहा प्रोक्तः सर्वरोगभयापहः ॥

---

१ ग नक्तं........ ओमिति नास्ति
२ ग अविशेषितः नास्ति
३ ग विशेष°
४ ख भक्षणस्य ( भक्षणस्यैव स्थले )
५ ग अनौचित्यात्
६ ख ङ सूर्यदिने
७ ङ अर्कमभ्यर्च्य विष्णुं वा चिरं जीवेत् स नीरुजः
८ ङ उक्तं प्राक्
९ ग ङ रोगहः

---

9-10 नरसिंहपुराण, ६७.८ पाठभेदः--अर्कदिवसे (सौरदिने स्थले ), समाचरेत् ( विधीयते स्थले)
स्नात्वार्कमध्ये विष्णुं च ध्यात्वा रोगात् प्रमुच्यते
13-11 पृ० ९६ भविष्यपुराण, १.९०. १-६ बहवः पाठभेदाः

योऽत्र सम्पूजयेद् भानुं शुभगन्धविलेपनैः ।
सर्वरोगविनिर्मुक्तो याति संज्ञापतेर्गृहम् ॥
अर्कपत्रपुटे कृत्वा पुष्पान्यर्कस्य सुव्रत ।
देवस्य पुरतो रात्रौ भक्त्या सम्पूजयेद् बुधः ॥
5 पूजयित्वार्कपत्रैस्तमर्कमर्कप्रियैः[1] सदा[2] ।
प्राशयित्वार्कपुष्पं तु दत्वा विप्राय दक्षिणाम् ॥
भुक्त्वा तु पायसं वीर रात्रौ स्वपिति भूतले ।
अनेन विधिना यस्तु पूजयेदत्र वै [3]द्विज ॥
10 स मुक्तः सर्वपापैस्तु गच्छेद्दिनकरालयम् ।
तस्मादपि व्रजेल्लोकं हुङ्काररवहेतिनः ॥

पुष्णः सूर्यस्य, भगदैवतं उत्तरफाल्गुनीति, उत्तरायां भगस्तथेति [4]भविष्यपुराणात् । कल्पतरौ तु [5]ज्योतिःशास्त्रदर्शनात् भगदैवत्यं पूर्वफाल्गुनीति [6]व्याख्यातम् । पायसभोजनं रात्रावेव । रात्रिकालीनयोः 15 पूजाशयनयोर्मध्येऽभिधानात् । एवं च नक्तरूपमेवेदं व्रतं नक्तपदानुपादाने अपि, संज्ञापतेः सूर्यस्य, हुङ्काररवहेतिनः ब्रह्मणः ।

शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद् यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
20 सर्वविजयसप्तम्यां महापातकनाशनम् ॥

१ ङ अर्कपुष्पैः
२ ग प्रियम् ( प्रियैः स्थले )
३ ख द्विजः
४ क भविष्यपुराण एव प्रत्यक्षदेवताभिधानात्
५ ख ङ ज्योतिःशास्त्रवचनक्रमेण, ग ज्योतिःशास्त्रार्थदर्शनात्
६ ग विख्यातम्

17-18 रघुनन्दन, तिथितत्त्व पृ० ३५ पाठभेदः-यदा भवेत् (भवेद् यदि स्थले)
17-20 भविष्यपुराण ४.४३. १-३ पाठभेदः --शुक्लपक्षे तु, यदादित्यदिनं भवेत् (सूर्यवारो ......यदि स्थले)

[1]पञ्चम्यामेकभक्तं च षष्ठ्यां नक्तं प्रकीर्त्तितम् ।
उपवासस्तु सप्तम्यामष्टम्यां पारणं [2]तथा ॥
उपवासपरं षष्ठ्यां सप्तम्यां पूजयेद्रविम् ।
गन्धपुष्पोपहारैश्च भक्त्या श्रद्धासमन्वितः ॥
प्रकल्प्य पूजां भूमौ तु देवस्य पुरतः स्वपेत् । 5
जपमानस्तु गायत्रीं सौरसूक्तमथापि वा ॥
[3]अक्षरं च महाश्वेतां षडक्षरमथापि वा ।
विबुद्धस्त्वथ सप्तम्यां स्नानं कृत्वा विधानतः ॥
ग्रहेशं पूजयित्वा तु होमं कृत्वा विधानतः ।
ब्राह्मणान् भोजयेद् [4]भक्त्या शक्त्या च गणनायकम् ॥ 10
शाल्योदनमपूज्याश्च षडेवेष्ट्यश्च शक्तितः ।
सघृतं पायसं दद्यात् तथा विप्रेषु शक्तितः ॥
दत्वा तु दक्षिणां [5]भक्त्या ततो विप्रान् विसर्जयेत् ।
इत्येषा कथिता [6]वीर पुण्या विजयसप्तमी ॥
यामुपोष्य नरो गच्छेत् पदं वैरोचनं [7]परम् । 15
करवीराणि च रक्तानि कुङ्कुमं [8]च विलेपनम् ॥
विजयधूपं सप्तम्यां भानोस्तुष्टिकरं च वै ।
एषा [9]पापहरा पुण्या [10]महापातकनाशिनी ।
अत्र दत्तं [11]हुतं वापि क्षीयते न गणाधिप ॥

---

१ क पञ्चम्यामेव
२ ग भवेत्
३ ङ अक्षरीं वा, क अक्षरं वा
४ ग शक्त्या भक्त्या
५ ङ शक्त्या
६ क ङ विप्र
७ क ख पदं
८ ख ङ °कराणि तु, ग °कराणि वै
९ क पुण्या पापहरा
१० क ख ग्रह°
११ ख ङ कृतं

---

1-19 भविष्यपुराण, १.८१. ४-१५ बहवः पाठभेदाः

महाफलम् अधिकफलं, तेनान्यत्र यद्दानफलमुक्तं तदत्राधिकं भवतीत्यर्थः, स्नानं [1]दानम् [2]इत्यादीनां प्रत्येकं फलार्थतयाविधिः सर्वत्रफलसम्बन्धात्, पञ्चम्यामेकभक्तमित्यादिना फलान्तरार्थितया उपवासविधिः, 'यामुपोष्य नरो गच्छेत् पदं वैरोचनं परमि'त्यन्तेऽभिधानात् उपवासपर
5 इत्यादिना सप्तम्युपवासाङ्गतया षष्ठ्यां पूजनमित्युक्तम्। न तु षष्ठ्यामुपवासः, पूर्वापरविरोधात्। भूमौ स्वपेदित्यन्वयः[3]। गायत्रीं प्रसिद्धामेव तस्या अपि [4]सर्वदैवतत्वात्। [5]सौरसूक्तो वेदे प्रसिद्धः। [6]अक्षरञ्च महाश्वेतामिति लिङ्गभेदेऽपि सामानाधिकरणं [7]छान्दसत्वात्। षडक्षरं ह्रीं ह्रीं सः सूर्यायेति मन्त्रः। करवीराणीत्यादिना सप्तमीपूजाङ्गतया[8] विधिः। विजयधूपो भविष्यपुराणे
10 [9]प्रसिद्धः।

> [10]वृषणं सिह्लकं विल्वं श्रीखण्डमगुरुं तथा
> कर्पूरं च तथा [11]मुक्तं शर्करां [12]मुनयो विदुः ॥
> इत्येवं विजयो धूपः स्वयं देवेन निर्मितः ॥

वृषणं कस्तुरिका।

> 15 शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः।
> महाजया तदा स्याद्वै [13]सप्तमी भास्करप्रिया ॥

---

१ क दानं नास्ति
२ क इत्यादिस्नानादीनां
३ ष अन्वयात्
४ घ सूर्यदेवतत्वात्
५ क सूरसूक्तो
६ क अक्षरं
७ क छान्दसतुल्यत्वात्
८ ख ङ अङ्गतया नास्ति
९ ख ङ एवोक्तः
१० क वृषणा
११ ख मुक्तां
१२ क सत्वचां द्विज (मुनयो विदुः स्थले)
१३ ङ अष्टमी

---

12–13 भविष्यपुराण, १-१००, ४ क, ६ ख
15–2 (पृ० ९९) रघुनन्दन, तिथितत्त्व, पृ० १४५ ब्रह्मपुराणोद्धृतवचनम्
पाठभेदः—प्रोक्ता (स्याद्वै स्थले), तपो (जपो स्थले), पितृदेवाभिपूजनम्

स्नानं दानं जपो होमः [१]पितृदैवतपूजनम् ।
सर्वं कोटिगुणं प्रोक्तं तपनेन महौजसा ॥
यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद् रविम् ।
सोऽश्वमेधफलं प्राप्य ततः सूर्यपदं व्रजेत् ॥
पयसा स्नापयेद् यस्तु भास्करं भक्तिमान्नरः । 5
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ॥
स्थित्वा तत्र चिरं कालं राजा भवति कंजज ।
महाजयैषा कथिता सप्तमी त्रिपुरान्तक ॥
यामुपोष्य नरो भक्त्या अचलामब्जजां लभेत् ।
ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥ 10

अत्रापि स्नानदानमित्यादिना स्नानादीनां [२]साधिकरणमेव विधिः [३]यामुपोष्येत्यादिना उपवासस्य साधिकारस्य विधिः, न तु [४]परस्परमङ्गाङ्गिभावः प्रमाणाभावात् [५]विनिगमनाविरहात् च ।

शुक्लपक्षस्य सप्तम्यां यद्दक्षं तु करो भवेत् ।

[६]करः हस्तः । 15

[७]यदा स्यात्तु महापुण्या सप्तमी पापनाशिनी ।
तस्यां सम्पूज्य देवेशं चित्रभानुं विभावसुम् ॥
सप्तजन्मकृतात् पापान् मुच्यते नात्र संशयः ।
यश्चोपवासं कुरुते तस्यां नियतमानसः ॥

---

१ क पितृदेवाभिपूजनम्
२ क साधिकारिणामेव, ख साधिकाराणामेव
३ ख याम्……… विधिः नास्ति
४ ख ङ परस्परम् नास्ति
५ ख ङ विनिगमकाभावाच्च
६ ङ करः हस्तः नास्ति
७ ङ तदा

---

16–10 (पृ० १००) भविष्यपुराण, १.९९.१-४,६-७ बहवः पाठभेदाः

सर्वपापाद्विनिर्मुक्तः सूर्यलोके महीयते ।
दानं यद्दीयते तत्र तत्फलं चाक्षयं भवेत् ॥
एका ऋग् देवपुरतो जप्ता श्रद्धापरेण तु ।
ऋग्वेदस्य समस्तस्य [1]यच्छते सा फलं ध्रुवम् ॥
5 सामवेदफलं साम यजुर्वेदफलं यजुः ।
अथर्वर्णोऽप्यथर्वस्य यच्छते [2]निखिलं फलम् ॥
यतः पापमशेषं तु नाशयत्यत्र भास्करः ।
करर्क्षसप्तमी कृष्णा तेनोक्ता पापनाशिनी ॥
[3]तस्यां [4]समभ्यर्च्य रविं याति सौमनसं पुरम् ।
10 विमानवरमारुह्य कर्पूरोद्भवमुत्तमम् ॥
कान्त्यात्रेयसमः कृष्ण शौर्ये हरिसमः सदा ।
मोदते तत्र सुचिरं वृन्दारकगणैः सह ॥
पुनरेत्य भुवं कृष्ण भवेद्वै क्षमाधिपाधिपः ।
[5]सुमनसो देवास्तेषां पुरं सौमनसं पुरम् ॥

15 कर्पूरोद्भवं सुवर्णघटितम्, आत्रेयः चन्द्रः, [6]क्ष्माधिपो महाराजः ।

आदित्य उवाच

[7]सप्तम्यामथवाष्टम्यां पक्षयोरुभयोरपि ।
योऽब्दमेकं नक्तभोजी [8]नियतात्मा जितेन्द्रियः ॥

---

१ ग यद् यस्य सफलं ध्रुवम्
२ क विपुलं
३ ङ अस्यां
४ क अभ्यर्च्य च
५ ग महीराजाधिराजः स्यात् ( सुमनसो········महाराजः स्थले )
६ ख क्ष्माधिपाधिपो राजराजः
७ सप्तम्यामथ षष्ठ्यां च
८ ङ नियतेन्द्रियः

यत् पुण्यं परमं प्रोक्तं सततं सत्रयाजिनां।
सत्यवादिषु यत् पुण्यं यत् पुण्यमृतुगामिनां ॥
तत्फलं सकलं प्राप्य मम लोकमुपैति सः ॥

मत्स्यपुराणे

सप्तम्यां नक्तभुग् दद्यात् समान्ते गां पयस्विनीं । 5
सूर्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम् ॥

समान्ते वर्षसमाप्तौ।

[1]यश्चोपवासी सप्तम्यां समान्ते हेमपङ्कजान् ।
गाश्चैव शक्तितो दद्याद्धेमघण्टासमन्विताः।
एतत् सौरव्रतं नाम सूर्यलोकफलप्रदम् ॥ 10

वाराहपुराणे

अथापरं [2]महाराज व्रतमारोग्यसंज्ञितम्[3] ।
कथयामि परं पुण्यं सर्वपापप्रणाशनम् ॥
[4]तस्यैव माघमासस्य सप्तम्यां समुपोषितः ।
पूजयेद् भास्करं देवं विष्णुरूपं सनातनम् ॥ 15
आदित्य भास्कर रवे भानो सूर्य दिवाकर ।
प्रभाकरेति सम्पूज्यो देवः सर्वेश्वरो रविः ॥
षष्ठ्याञ्चैव कृताहारः सप्तम्यामुपवासकृत् ।

---

१ यश्चोपवासं
२ ग महाबाहो
३ ख ङ °संज्ञकम्
४ क तत्रैव

---

5-6 मत्स्यपुराण १०१.६०
8-9 मत्स्यपुराण १०१.६३ पाठभेदः—हेमपङ्कजम्, गावश्च (गाश्चैव स्थले) हेमान्नघटसंयुताः
12-4 (पृ० १०२) वराहपुराण, ६२. १-५क पाठभेदः :—
3-4 पङ्क्तिः नास्ति, सम्पूज्य, एवं व्रतमुपाचरेत ( देव··रविः स्थले ), भानुमर्चयेत् ( उपवासकृत् स्थले )

अष्टम्याञ्चैव भुञ्जीत एष एव विधिक्रमः ॥
अनेन वत्सरं [1]पूर्णं विधिना योऽर्चयेद्रविम् ।
तस्यारोग्यं धनं धान्यमिह जन्मनि जायते ॥
परत्र च [2]शुभं स्थानं यद् गत्वा न निवर्त्तते ।

5 भविष्यपुराणे—आदित्य उवाच

माघमासे तु [3]सप्तम्यां शुक्लायां समुपोषितः ।
यः पूजयेन्न मां भक्त्या तस्याहं पुत्रतां व्रजे ॥
एवञ्चोभयसप्तम्यां मासि मासि [4]सुरोत्तम ।
यस्तु [5]मां भोजयेद् भक्त्या अब्दमेकं समादरात् ॥
10 प्रयच्छामि सुतं तस्य आत्मनोऽशसमुद्भवम् ।
वित्तं यशस्तथा पुत्रमारोग्यं परमं तथा ॥
माघे मासि तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः ।
उपोष्य विधिवत् षष्ठ्यां श्वेतमाल्यविलेपनैः ।
पूजयित्वा तु मां ब्रह्मन्निशि भूम्यां स्वपेद् बुधः ॥
15 पुनरुत्थाय सप्तम्यां कृत्वा स्नानादिकां क्रियाम् ।
पूजयित्वा तु मां [6]ब्रह्मन् वीरहोमं समाचरेत् ॥
प्रीणयित्वा हरिं भक्त्या हविषा पद्मलोचनं ।
दध्योदनेन पयसा पायसेन द्विजांस्तथा ॥
तस्यैव कृष्णपक्षस्य षष्ठ्यां सम्यगुपोषितः ।
20 रक्तोत्पलैः सुगन्धाद्यैः रक्तपुष्पैश्च पूजयेत् ॥
एवं यः पूजयेद् भक्त्या नरो मां विधिवत् सदा ।
उभयोरपि देवेन्द्र सपुत्रः लभते [7]फलम् ॥

१ ङ पूर्व°
२ ङ परं
३ ग शुक्लायां सप्तम्यां
४ ख सुरोत्तमः
५ ग सं°
६ ख भक्त्या
७ ख ङ वरं

वराहपुराणस्य वचनं रघुनन्दनेन तिथितत्त्वे ( पृ० ३६ ) समुल्लिखितम

वीरहोममग्निहोमम्, [१]हरिमादित्यम्, [२]तस्य माघस्य [३]व्रतञ्चेदमेकमेव संवत्सरसाध्यम् [४]अब्दमेकमिति[५] श्रवणात्। एवञ्च प्रथमं माघमात्रकथनम् आरम्भाभिप्रायम्, 'माघे मासि तु यो ब्रह्मन्' इत्यादिना तस्यैव प्रयोगकथनमपेक्षितपरत्वात्। एवञ्च सदेति पदं संवत्सरावच्छेदेन उभयोः शुक्लकृष्णसप्तम्योः, अन्ये तु एकं व्रतं माघशुक्लसप्तमीमात्रे, अपरं 5 [६]पक्षद्वयसप्तम्यां, सांवत्सरिकमपरपक्षद्वयसप्तम्यां 'यावज्जीवं सदे'ति श्रवणादिति व्रतत्रयमिच्छन्ति। तन्न, संक्षिप्य [७]पूर्वमुक्तस्य हि विवरणमात्रमिति युक्तम्। एवञ्चाकाङ्क्षाबलात् [८]वाक्यैकवाक्यताप्रतीतौ वाक्यभेदकल्पनं कर्मभेदकल्पनं चायुक्तं प्रत्यभिज्ञाविरोधात्; पुत्राख्यतुल्यफलश्रुतौ गुरुलघूपायबलेन भूयस्त्वादिकल्पनापत्तेश्च। [९]एवञ्च पुनः पुनः पुत्राख्यफलश्रुतिर्दाढ्यार्था। 10

मत्स्यपुराणे

माघे मास्युषसि स्नानं कृत्वा दाम्पत्यमर्चयेत्।
भोजयित्वा यथाशक्त्या माल्यवस्त्रविभूषणैः।
सूर्यलोके वसेत् कल्पं सूर्यव्रतमिदं स्मृतम्॥

इदमेव केवलं [१०]माघमासस्नाने प्रमाणम्। 15

---

१ ख ङ हरिं सूर्यम्

२ ङ तस्य माघमासस्य

३ क व्रतं सत्यञ्चे॰

४ ग विध्यर्थवादाभ्यां प्रतिपादित अतः एक कल्पः (आधिक्येन)

५ ग इति नास्ति

६ ख पक्षद्वयसतम्यां नास्ति

७ पूर्वमुक्तस्य इत्यारभ्य कार्त्तिकं सकलं मासम् पर्यन्तं (पृ० १०५) ग पुस्तके अन्यत्र दृश्यते (पृ० २३)

८ ख वाक्यैकवाक्यतया

९ ङ एवञ्च पुनः पूजाख्यं

१० ग माघस्नाने, ङ मासस्नाने

---

12–14 मत्स्यपुराण, १०१.३६ पाठभेदः–विभूषणः (विभूषणैः स्थले)

यदीच्छेद् विपुलान् भोगान् चन्द्रसूर्यग्रहोपमान् ।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥

इति [1]विष्णुवाक्यात्,

प्रातःस्नायी च सततं द्वौ मासौ माघफाल्गुनौ ।
5 देवान् पितॄन् समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥

इति यमवाक्याच्च, माघफाल्गुनस्नानं देवान् पितॄन् समभ्यर्च्येति स्नानाङ्गदेव[2]पितृतर्[3]पणानुवादः। अतो जुहोतिवत् स्नातीत्यस्यानतिदेशकत्वाद-धर्मकत्वम् । प्रातःस्नानं निमज्जनमात्रमिति हरिहरमतं, [4]युक्तञ्चैतत् । नित्यप्रातःस्नाने तु 'यथाहनि तथा प्रातर्नित्यं स्नायादनातुर' इति वाक्यात्
10 अहःस्नानधर्मा इत्यविवादः ।

सितासिते तु यत् स्नानं माघे मासि युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटीशतैरपि ॥

इति तु [5]प्रातःस्नाने प्रमाणम् ।

15 गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलम् ।
प्रयागे माघमासे तु [6]त्र्यहं स्नानेन [7]तत् फलम् ॥

---

१ ग विष्णुपुराणवाक्यात्
२ ग पितृ नास्ति
३ ख ङ तर्पणानुवादात्
४ ङ न युक्तञ्चैतत्
५ ङ प्रातःस्नानेन प्रमाणम्
६ ङ त्र्यहः
७ ख तत् फलम् नास्ति

---

1–2 रघुनन्दन, तिथितत्त्व, पृ० ३८ पाठभेदः—य इच्छेत् (यदीच्छेद् स्थले)
विष्णुसंहिता ९०.२९ पाठभेदः—°ग्रहोपगान्
11–12 रघुनन्दन, मलमासतत्त्व, पृ० २५२ (मार्कण्डेयपुराणोद्धृतं वचनम्)
पाठभेदः—यः स्नायात् (यत् स्नानं स्थले)

इति तु कृत्स्नमाघस्नाने अपि न प्रमाणम्। किञ्चैतद्वचनद्वयान्न प्रयागादन्यत्र स्नानसिद्धिः। तस्मात् माघे मासीत्यादिलिखितवाक्यादेव परं माघमासमात्रे प्रातःस्नानम्। [1]एवञ्चारब्धस्य माघस्नानस्य अशौचेऽपि[2] न त्यागः व्रतरूपत्वादिति प्राक् प्रपञ्चितमस्माभिः।

कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः। 5
हविष्यभुक् जपन् शान्तः सर्वपापैः प्रमुच्यते॥

इति विष्णुविहितकार्त्तिकस्नानस्यापि [3]यदि [4]व्रतरूपतयाप्रमाणमस्ति [5]तदा तस्याप्यारब्धस्य [6]अशौचे न त्यागः। व्रतत्वपक्षे चात्राग्निपूज्यः मासः कार्त्तिकेऽग्निदैवत्य इत्युपक्रमात्। 'नित्यस्नायी [7]प्रातःस्नायी प्रातःस्नानं नित्यस्नानमि'ति शङ्खोक्तेः आचाराच्च। अत्र स्नानं प्रधानं हविष्य- 10 भोजनादि चाङ्गमिति सम्प्रदायः, फलश्रुतेस्त्व[8]विशेषात् सर्वान्वये सर्वेषामेव साधिकारत्वं प्रतिभाति। अत्र यद्यपि [9]कार्त्तिकपदं चान्द्रमासमुख्यमिति प्रागुक्तं तथाप्याचारोपष्टम्भात् सौरमासग्रहः।

तुलामकरमेषेषु प्रातःस्नायी भवेत् सदा।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्॥ 15

---

१ क एवञ्चारब्धस्य माघमासस्य स्नानस्य, ग एवञ्चारब्धमाघस्य मासस्य, ङ प्रातःस्नानमित्यतः तदा चन्द्रपतिपूजाचरणमुक्तम् इति अधिकः पाठः
२ क ग अपि नास्ति
३ क ग यदि नास्ति
४ क व्रतरूपतायां
५ ग तदा नास्ति
६ ङ अशौचेऽपि
७ क ग प्रातःस्नायी नास्ति
८ ग स्त्वविशेषः
९ क कार्त्तिकादि°

---

5–6 विष्णुसंहिता ८९.४ पाठभेदः—जपन् हविष्यभुग् दान्तः (हविष्यभुक् जपन् शान्तः स्थले)

14-15 रघुनन्दन, मलमासतत्त्व, पृ० ३४०
(पद्मपुराणोद्धृतं वचनम्) पाठभेदः—प्रातःस्नानं विधीयते (प्रातः.... सदा स्थले)

इति वाक्यमपि पठन्त्यलमिति विचारेण।

अथ शिवव्रतानि ॥

तत्र भविष्यपुराणे—विष्णुरुवाच

कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः ।
5 मासि मार्गशिरे विप्र शंकरं देवमर्चयेत् ॥
पीत्वा शक्त्या च गोमूत्रमनाहारो निशि स्वपेत् ।
अतिरात्रस्य यज्ञस्य फ़लमष्टगुणं [१]लभेत् ॥
माघे महेश्वरं विप्र कृष्णाष्टम्यां प्रपूजयेत् ।
निशि पीत्वा च गोक्षीरं गोमेधफलमाप्नुयात् ॥
10 एवं पौषेऽपि सम्पूज्य शम्भुनामानमीश्वरं ।
कृष्णाष्टम्यां घृतं प्राश्य वाजपेयफलं लभेत् ॥

फलमाप्नुयात् ।

फाल्गुने च महादेवं [२]प्रपूज्य प्राशयेत्तिलान् ।
राजसूयस्य यज्ञस्य फलमष्टगुणं [३]लभेत् ॥
15 चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां प्रपूजयेत् ।
यवांश्च भर्जितान् प्राश्य [४]सोऽश्वमेधफलं लभेत् ॥
[५]वैशाखे शिवनामानं पूजयित्वा प्रयत्नतः ।
रात्रौ कुशोदकं पीत्वा सर्वमेधफलं लभेत् ॥
ज्यैष्ठे पशुपतिं पूज्य गवां श्रृङ्गोदकं पिबेत् ।
20 गवां कोटिप्रदानस्य यत् फलं तदवाप्नुयात् ॥

---

१ ग भवेत्
२ ख ङ सम्पूज्य
३ ग भवेत्
४ क सर्वमेधफलं लभेत्
५ क वैशाखे·········लभेत् (18) नास्ति

आषाढे चोग्रनामानमिष्ट्वा प्राश्य च गोमयम् ।
वर्षाणां च शतं साग्रं शिवलोके महीयते ॥
शंवर्त्तुः श्रावणे मासि [1]पूजार्कं प्राशयेन्निशि ।
गोसवस्य तु यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥
[2]त्र्यम्बकञ्च भाद्रपदे कृष्णाष्टम्यां [3]प्रपूजयेत् । 5
[4]संप्राश्य विल्वपत्रं तु वाजपेयफलं लभेत् ॥
मासे चाश्वयुजे प्रोक्तं प्राशनं तण्डुलोदकम् ।
नाम्ना ईशं [5]यजेद्देवं पुण्डरीकफलं लभेत् ॥
मासे तु कार्त्तिकेऽष्टम्यामीशानाख्यं प्रपूजयेत् ।
पञ्चगव्यं सकृत् पीत्वा पञ्चयज्ञफलं लभेत् ॥ 10
वर्षान्ते भोजयेद्विप्रान् शिवभक्तिपरायणान् ।
पायसं [6]मधुसंयुक्तं [7]घृतेन सुपरिप्लुतम् ॥
निवेदयेत रुद्राय गां कृष्णां च पयस्विनीम् ।
वर्षमेकं तथा कुर्यान्निरन्तर्येण यो नरः ॥
कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं शृणु । 15
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
वसेच्छिवपुरे नित्यं न चेहायाति नाकभाक् ॥

कृत्वा [8]नक्तमिति नक्तव्रतं [9]संकल्प्येत्यर्थः । नक्तभोजनान[12]न्तरं रात्रावेव पूजति बोद्धव्यम् । [10]एवं पौषेऽपीति [11]नक्तप्राशनानन्तरमनाहारत्वं

१ ङ पूज्य
२ ग त्र्यम्बकं वै
३ क च पूजयेत्
४ क संप्राप्य
५ भजेद्देवं
६ क ङ घृतसंयुक्तं
७ ख ङ मिष्टान्नेन परिप्लुतम्
८ क न तु नक्तं
९ क संकल्पयेदित्यर्थः
१० ङ न तु ( एवं स्थले )
११ क नक्तप्राशनं तदनन्तरमनाहारत्वं
१२ ख अनन्तरं नास्ति

चातिदिश्यते। एवं मासान्तरेष्वपि। विहितं द्रव्यविशेषं [१]निशि प्राश्यानाहारः स्वपेत्, तत्रापि कृष्णाष्टमी न श्रुता निशाकालश्च न श्रुतस्तत्रापि मासे [२]तद्वोद्धव्यं [३]पूर्वापरपरामर्शात् [४]प्रतिमासश्रुतप्राशनफलं[५] चात्र गुणफलरीत्या संवत्सरफलं चाधिकारविशेषणमिति सर्वं समञ्जसम्।

5 मतस्यपुराणे

नक्ताशीत्यष्टमीषु स्याद् वत्सरान्ते च धेनुदः।
[६]पौरन्दरपुरं याति सुगतिव्रतमुच्यते॥

वाराहपुराणे

रौद्रं व्रतं चतुर्दश्यां कृष्णपक्षे विशेषतः।
10 तन्माघमासमारभ्य पूर्णं संवत्सरं नृप।
इदं व्रतं नक्तरूपं पापक्षयकरं[७] परम्॥

वाराहपुराण एव [८]वाक्यम्।

मत्स्यपुराणे

चतुर्दश्यां तु नक्ताशी समान्ते गोयुगप्रदः।
15 शैवं पदमवाप्नोति त्र्यैयम्बकमिदं स्मृतम्॥

---

१ ख निशि नास्ति
२ ख तत् नास्ति
३ क पूर्वापरावमर्शात्
४ क ङ प्रतिमासस्तु
५ ख फलं नास्ति
६ ख ङ पौरन्दरपदम्
७ क चेति
८ ङ व्यक्तम्

---

9-11 वराहपुराण, ६५.१०ख-११ पाठभेदः—रौद्रव्रतं, माघमासात्तथारभ्य, इदं व्रतं तु पञ्चम्यां शुक्लायां नक्तभोजनम्
14-15 मत्स्यपुराण, १०१.६७ पाठभेदः—गोधनप्रदः

[१]भविष्यपुराणे

कृष्णाष्टमी तु नक्तेन तथा कृष्णचतुर्दशीम् ।
इह भोगानवाप्नोति परत्र शिवमृच्छति ॥

तथा

चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः । 5
योऽब्दमेकं न भुञ्जीत शिवार्चनपरः शुचिः ॥
यत् पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् ।
[२]तत् पुण्यं सकलं तस्य शिवलोकं स[३] गच्छति ॥

[४]स्कन्दपुराणे

चतुर्दशीमष्टमीं च पक्षयोरुभयोरपि । 10
अहोरात्रं क्षिपेद् यस्तु संवत्सरमशेषतः ॥
स तेन कर्मणा युक्तः सर्वपापविवर्जितः ।
न याति नरकं देवी यमं [५]च स न पश्यति ॥

महाभारते

अष्टमीमनु कौन्तेय शुक्लपक्षे चतुर्दशीम् । 15
उपोष्य व्याधिरहितो रूपवानभिजायते ॥

[६]मत्स्यपुराणे

ग्रीष्मे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् ।
यात्यष्टमीचतुर्दश्योः रुद्रव्रतमिदं स्मृतम् ॥

---

१ ङ भविष्ये
२ ग यत् (तत् स्थले)
३ ङ संगच्छति
४ ङ स्कान्दे
५ ग तु ( च स्थले )
६ ङ मात्स्ये

---

18-19 मत्स्यपुराण, १०१.७६ पाठभेदः—ज्यैष्ठे ( ग्रीष्मे स्थले )

अत्र [1]ग्रीष्मवर्त्तिषु सर्वाष्टमीषु चतुर्दशीषु च दिवा पञ्चाग्निव्रतं कर्त्तव्यम् । सायं हेम्नो धेनोश्च दानमिति प्रयोगः । अमावास्यायामपराह्ण इतिवत् [2]काले द्वयं सामञ्जसम्, न तु प्रत्यहं व्रतमष्टमीचतुर्दशीसम्बन्धश्च दानमात्र इति मन्तव्यं प्रधानान्वयबाधापत्तेः ।

5 नक्तमब्दं चरित्वा तु गवा सार्द्धं कुटुम्बिने ।
हैमं चक्रं त्रिशूलं च दद्याद्विप्राय वाससी ॥
शिवरुद्रौ नतोऽस्मीति शिवलोके स मोदते ।
एतद् देवव्रतं नाम महापातकनाशनम् ॥

नक्तमब्दमिति प्रत्यहं नक्ताचरणं तिथ्यादिविशेषानुपादानात् ।

10 कार्त्तिक्यां [3]तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ।
शैवं पदमवाप्नोति शैवं व्रतमिद स्मृतम् ॥
कार्त्तिकादितृतीयायां प्राश्य गोमुत्रयावकम् ।
नक्तं चरेदब्दमेकमब्दान्ते गोप्रदो भवेत् ॥
गौरीलोके वसेत् कल्पं ततो राजा भवेदिह ।
15 एतद् रुद्रव्रतं नाम सदा कल्याणदायकम् ॥

[4]तृतीयायामेकवचनान्ततृतीयापदेन प्रतिमाससमन्वयात् । कार्त्तिकशुक्ल-[5]तृतीयामारभ्य व्रतमिदं शुक्लादिमासग्रहणस्य पूर्वमेव[6]मुक्तत्वात् । अत्र [7]च

---

१ ग ग्रीष्मवर्त्तियावदष्टमीचतुर्दशी
२ क कालद्वये
३ क तु नास्ति
४ क तृतीयाम् ( तृतीयायां स्थले )
५ क तृतीयायाम्
६ क ङ एवं नास्ति
७ क च नास्ति

---

5–8 मत्स्यपुराण, १०१. २-३ पाठभेदः—
शिवरूपस्ततोऽस्माभिः ( शिवरुद्रौ नतोऽस्मीति स्थले )
10–11 मत्स्यपुराण, १०१.६५ पाठभेदः—च (तु स्थले), वार्षं ( शैवं स्थले )
12–15 मत्स्यपुराण, १०१.४२-४३ पाठभेदः—१३ कल्याणकारकम्

पावकपदेन तुल्यजातिव्रीह्यादिनिवृत्तेरुपकरणस्य च [१]घृतादेरनुप्राशो न विरुद्धः, रुद्रव्रतत्वेन श्रवणेऽपि तृतीयाव्रतत्वात् गौर्य्यपि पूज्येति वदन्ति ।

अथ विष्णुव्रतानि ॥

तत्र [२]वराहपुराणे

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने । 5
शुक्ले वा यदि वा कृष्णे तद् व्रतं वैष्णवं महत् ॥
एतद्विद्वन् सुघोराणि हन्ति पापानि पार्थिव ।

[३]द्वादशीभोजनश्रवणात् द्वादशीपारणपर्यन्तव्रतमिदम् । एवञ्च 'द्वादश-द्वादशीं हन्ति त्रयोदश्यां तु [४]पारणमि'ति निन्दा एतन्मूलिकैव । अत एव [५]लोके द्वादश्यादरः । 10

[६]नरसिंहपुराणे

एकादश्यां नरश्रेष्ठ उपवासो विधीयते ।
नरसिंहं समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥

अत्र केश्चित् आराधनाय द्वादश्यां विष्णोरित्यनेन सममेकमूलत्वार्थं द्वादश्यां विष्णुपूजनमित्युक्तम् । तन्न, समभ्यर्च्येति क्त्वाप्रत्ययेनानुष्ठेयक्रियान्तरेण सह 15 समानकर्तृकता बोधयितुमुचितेति अभ्यर्च्योपवासो विधीयत इत्यन्वयादेकादश्या-

१ घृतादेरत्र°
२ ङ वाराहे
३ क ङ द्वादशीभोजनं चैवं
४ क पारणेति
५ ग लोके नास्ति
६ ङ नारसिंहे

5 7 वराहपुराण, ६५. ८-९क पाठभेदः—वाप्यथवा (वा यदि वा स्थले), एवञ्चीर्णं (एतद्विद्वन् स्थले)

8 रघुनन्दन, एकादशीतत्त्व, पृ० ५१

12–13 नरसिंहपुराण, ६७ ७ पाठभेदः—उपवासो (एकादश्यां स्थले), एकादश्याम् (उपवासो स्थले)

मेवार्चनम् । अत एव [१]एकादशीव्रत एवेदं वाक्यं निबन्धेषु लिखितम् । सर्वपापैः प्रमुच्यते इत्यर्थान्मुक्तिरुक्तैव । न [२]चैवमुपवासानन्तरमेव शरीरपातापत्तिः अवस्थाविशेषसहकृता[३]पूर्वस्य फलज[४]नकत्वात् । एतेन फलजनककालविद्यमान पापपरं [५]सर्वपापपदं योग्यत्वादिति ।

5 [६]मत्स्यपुराणे

एकादश्यां तु नक्ताशी यश्चक्रं विनिवेदयेत् ।
चैत्रे समान्ते सौवर्णं विष्णोः पदमवाप्नुयात् ।
एतद्विष्णुव्रतं नाम कल्पान्ते राज्यलाभकृत् ॥

[७]वराहपुराणे

10 एकादश्यां तु यत्नेन नक्तं कुर्याद् यथाविधि ।
मार्गशीर्षस्य शुक्लायामारब्धाब्दं विचक्षणः ।
तद् व्रतं धनदस्येष्टं कृतं वित्तं प्रयच्छति ॥

एकादश्यामित्य[८]विशेषितप्रथमोक्तेः पक्षद्वये व्रतमिदं, शुक्लाया- मित्यस्यारम्भमात्रसम्बन्धात्, [९]अत्र च व्रते विष्णुरेव देवता व्रतान्तरेषु तथा

१ क एकादशीव्रतं सवेदवाक्यं निबन्धे लिखितम्
२ क उपवासानन्तरशरीरपातापत्तिः
३ ख घ पूर्वदृष्टस्य ( पूर्वस्य स्थले )
४ ग कृत ( जनक स्थले )
५ क पाप नास्ति
६ ङ मात्स्ये
७ ङ वाराहे
८ क अशोधित ( अविशेषितः स्थले )
९ ग अतः ( अत्र च व्रते स्थले )

6-8 मत्स्यपुराण, १०१.५८ पाठभेदः– च ( तु स्थले ), समान्ते वैष्णवं हैमं, स विष्णोः पदमाप्नुयात्, कृष्ण (विष्णु स्थले), राजभाग् (राज्यलाभकृत् स्थले )

10-12 वराहपुराण, ६५. ६-७ पाठभेदः– निराहारो नरः ( तु यत्नेन नक्तं स्थले ), मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः

दर्शनात् । धनदस्येष्टं कुबेरस्य प्रियमित्यर्थः । धनदोऽत्र विष्णुरेव [1]वा सहकारिविशेषात् योग्यस्यापि बलवत्त्वात्, इदं चैकादशीव्रतचतुष्टयं काम्यं फलश्रवणात् । [2]गौडास्तु

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥ 5

इत्यादिवचनविभीषिकामात्रान्निर्मलादेकादश्युपवासं[3] नित्यमिच्छन्ति । [4]तत्रापि

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥

इति वाक्यात् यतिवनस्थयोः पक्षद्वये गृहस्थस्य शुक्लामात्र एव व्यवस्था- 10
[5]मिच्छन्ति । [6]मत्स्यपुराणे

द्वादश द्वादशीर्यस्तु समाप्योपोषणैः सह ।
गोवस्त्रकाञ्चनैर्विप्रान् पूजयेच्छक्तितो नरः ॥
परं पदमवाप्नोति विष्णुव्रतमिदं स्मृतम् ॥

द्वादशी शुक्ला । समाप्य विष्णुपूजादिना । उपोषणैः एकादश्यु- 15
पवासपूर्वम् । तथैव [7]द्वादशद्वादशीव्रतस्य विष्ण्वादौ दर्शनात् । देवीपुराणे

मार्गशीर्षादारभ्य केशव नारायण-माधव-गोविन्द-विष्णु-मधुसूदन-त्रिविक्रम-वामन-श्रीधर-हृषीकेश-पद्मनाभ दामोदरान् पूजयेत् धूपस्रग्दीपाद्यैरुपोष्य

---

१ क ख ङ वा नास्ति
२ क ङ गौडाः
३ क भयात् ( विभीषिकामात्रान्निर्मलात् स्थले )
४ ङ तत्रापि नास्ति
५ ग इच्छन्तीति
६ ङ मात्स्ये
७ ख ग द्वादश नास्ति

---

4–5 रघुनन्दन, एकाशीतत्त्व, पृ० २३, पाठभेदः–ब्रह्महत्यादिकानि च
8–9 रघुनन्दन, एकादशीतत्त्व, पृ० ३६
12–14 मत्स्यपुराण, १०१.६४ पाठभेदः—°षणेन च ( °षणैः सह स्थले ), परमं पदमाप्नोति

संपूज्य दक्षिणाभिर्नामभिः। अश्वमेध-नृपसूय-वाजपेय-अतिरात्र-उक्थ-अग्निष्टोम-गोमेध-[1]पुरुषमेध-सौत्रामणि-पञ्चयज्ञ-होम-गोलक्ष-[2]सर्वमखाश्चाप्यन्ते नित्यस्मरणा-[3]दर्चनाच्च तन्नामजपाच्च इति नामद्वादशीव्रतम्। तत्र एकादश्युपवासः। मार्गशीर्षादिद्वादशशुक्लद्वादशीषु यथाक्रमं केशवादिद्वादशनामभिः पूजाजपहोम-
5 स्मरणानि केशवादीनामेव प्रीतये दक्षिणादानं पूजापूर्वदिनेऽपि, पूजयेदि-त्युक्त्वा उपोष्य सम्पूज्येति पुनरभिधानात् इति नामद्वादशीव्रतमित्युपसंहारात् द्वादशीव्रतमिदम्, ऋष्यन्तराच्च। अत एव निबन्धेषु तथा लिखितमिति।

विष्णुः

मार्गशीर्षशुक्लैकादश्यामुपोष्य द्वादश्यां भगवन्तं वासुदेवम् अभ्यर्चयेत् पुष्प-
10 धूपानुलेपनदीपनैवेद्यैर्वह्निब्राह्मणतर्पणैश्च। व्रतमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति। [4]यावज्जीवं कृत्वा श्वेतद्वी[5]पमवाप्नोति, उभयपक्षद्वादशीष्वेवं संव-त्सरेण स्वर्गलोकमवाप्नोति, यावज्जीवं [6]कृत्वा विष्णुलोकमवाप्नोति, एवं पञ्चदशीष्वपि।

ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च।
15 योगभूतं परिचरन् केशवं मद्दाप्नुयात् ॥

---

१ ख ग ङ पुरुषमेध नास्ति
२ ग सर्व (सर्व स्थले)
३ क ख तद्दर्शनाच्च
४ यावज्जीवं ......... अवाप्नोति क पुस्तके नास्ति
५ ख द्वीपम् (श्वेतद्वीपम् स्थले), ग श्वेतधूपम्
६ ख कृत्वा नास्ति

---

17 (पृ० ११३)–7 देवीपुराण, ७९.४६ पाठभेदः—मार्गशिरादौ (मार्गशीर्षादारभ्य स्थले), गोविन्द ...... दामोदरान् अंशः नास्ति, दक्षिणाभिश्च वाजपेयं (वाजपेय स्थले), हेम (होमस्थले), गोलक्षं सर्वमथा स्थाप्यन्ते (गो ......... श्चाप्यन्ते स्थले), अर्चनाच्च ......... इति नास्ति।

9–2 (पृ० ११५) विष्णुसंहिता, ४९.१.१० पाठभेदः—उपोषितो, अर्चयेत्, वह्नि नास्ति, प्राप्नोति, अवाप्नोति नास्ति, एवमेव, संहितायाः नवमी पङ्क्तिः ईदृशी 'दृश्यते सहितौ यस्यां दिवि चन्द्र-

[1]तथा महापौर्णमासीमुक्त्वा तस्यां स्नानोपवासाद्यमक्षयं समुदाहृतम्। तथैव द्वादशीशुक्ला या स्याच्छ्रवणसंयुता भगवन्तं वासुदेवमिति श्रवणात् भगवते वासुदेवायेति पूजाहोमयोर्निर्देशः। तेन [2]पूजा द्वादशाक्षरेण, होमः स्वाहान्तेन। वह्निब्राह्मणतर्पणैरिति बहुवचनात् वह्नय आहुतयः, ब्राह्मणा अपि बहव [3]एव भोज्याः, उभयत्र बहुत्वान्वयात्। व्रतमेतदेकादश्युपवासपूर्वकं विष्णु-पूजारूपं संवत्सरान्तर्गतशुक्लाद्वादशीषु यावज्जीवम् आरम्भात् प्रभृति आवश्यक-त्वात् [4]आरम्भावच्छेदकस्य स एवास्थीयते। यदैव व्रताधिकारः तदारभ्यैव व्रतमिदं कर्त्तव्यं, येन तदनारब्धं तेन न कर्त्तव्यमित्याहुः, तन्न अलौकिकत्वात्। श्वेतद्वीपो [5]वैष्णवोपभोग्यः स्वर्गविशेषो महाभारते नारायणीयोपाख्याने प्रपञ्चितः। उभयपक्षद्वादशीष्वेवम् इत्यादिना अग्निव्रतद्वयकथनात्, पूर्वव्रत[6]द्वयं शुक्लद्वादशीमात्रे [7]व्रतचतुष्टयमपि। चैतत् काम्यं रात्रिसत्रवत् फलश्रुतेरधिकार-विशेषेणा[8]र्हत्वात्। यावज्जीवश्रुतेर्न तद्वयं नित्यमिति हरिहरः, तन्न, सवंत्सर-साहचर्यात्, यावज्जीवपदस्य कालपरत्वात्। किञ्च, यावज्जीवश्रुतिफलश्रुत्योर-न्यतरस्वरसानुरोधेन फलश्रुतिस्वरसोऽनुरो[9]ध्यः कामाधिकारानुगुण्यात्। अत एव लघ्वीमते पुत्र इत्यस्य[10]वैफल्येऽपि[11]अर्थवादबलात् कामाधिकारो जातेष्टावुक्तः। अन्यथानुषज्यमाप्नोतीति पदवैयर्थ्यापत्ते[12]श्च। कामाधिकारोऽत्रेति [13]नायं

---

१ ग तथा नास्ति
२ क पूज्यो
३ ग श्व
४ क आरम्भेणावच्छेदकस्य, ख आरम्भस्यावच्छेदकस्य, ग अनारम्भेणावच्छेदस्य, ङ आरम्भावच्छेदस्य
५ क वैष्णवभोग्यः
६ ग द्वयं नास्ति
७ ग इदमपि व्रतं
८ ख ग अर्थत्वात् (अर्हत्वात् स्थले)
९ ख ङ °रोधात् (°गुण्यात् स्थले)
१० क वैगुण्येऽपि
११ क ङ अनुवादबलात्
१२ क वैषम्यापत्तेश्च
१३ क न (नायं स्थले)

---

वृहस्पती' (तथा ……मुक्त्वा स्थले) पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा, दान (स्नान स्थले)

यावज्जीवाधिकरणविषयः। एवं पञ्चदशीष्वपि। पूर्वोक्तव्रतचतुष्टयं स्वाङ्गं सफलञ्च पञ्चदश्यामपि कर्त्तव्यमित्यर्थः। [1]तेनात्रामावास्यालाभात् योगभूतमिति व्रतचतुष्टयेऽपि सर्वत्र पौर्णमासीलाभात् महत् फलम् तथैवेत्यादिना श्रवण-द्वादश्यां स्नानाद्यक्षयफलमुच्यते,[2] उपवासस्तु द्वादशीव्रतपूजादिद्वाराक्षयफला-

5 र्थाद्येकादश्याम्।

वामनपुराणे प्रेतोपाख्यानमुखेन व्रतकथनं।

प्रेत उवाच

श्रवणद्वादशी नाम मासि भाद्रपदे भवेत्।
ततो नागरिको लोको गतः स्नातुं हि सङ्गमम्॥
10 इरावत्या नड्वलाया ब्रह्मक्षत्रपुरःसरः।
प्रतिवेश्यानुरोधेन तत्राप्यनुगतोऽस्म्यहम्॥
कृतोपवासः शुचिमानेकादश्यां यतव्रतः।
ततः सङ्गमतोयेन वारिधानीं नवां दृढ़ाम्॥
सम्पूर्णां वस्त्रसम्बीतां छत्रोपानहसंयुताम्।
15 घृतपात्रं तु [3]मृष्टस्य पूर्णं दध्योदनस्य वै॥

---

१ कर्त्तव्यमित्यर्थः अस्मात् परं ख ग ङ पुस्तके ईदृक् अधिकः पाठः— तेनात्रापि चतुर्दश्यामुपोष्य पञ्चदश्यां वासुदेवपूजादिब्रह्मभूतं ब्रह्मस्वरूपं तच्चोभयपक्षीयं पञ्चदशीव्रतद्वये

२ क अक्षयत्वम् (अक्षयफलम् स्थले)

३ ग मिष्टस्य

---

8–3 (पृ० ११७) वामनपुराण, ७९.५०ख—५३क पाठभेदः—
अभवत् (भवेत् स्थले), प्रातिवेश्येप्रसङ्गेन, दृढान्नवाम्, वस्तु (वस्त्र स्थले), छत्रोपानत्सुसंयुताम्, मृत्पात्रमतिमृष्टस्य, प्रदत्तं, ब्राह्मणायोच्चैः शुचये नातिकर्मणा, यत्तदन्नं पयोऽम्भसा, दत्तं (वृत्तम् स्थले)

प्रददौ [1]ब्राह्मणाद्याय शुचये कृतकर्मणे ।
एतत्ते कारणं प्रोक्तं यदन्नं च सहाम्भसा ।
वृत्तं तदिदमायाति मध्याह्नेऽपि दिने दिने ॥

ततस्तस्यां श्रवणद्वादश्यामित्यर्थः, कृतोपवास एकादश्यामित्यन्वयः। [2]इरावतीनड्वलासङ्गमश्चात्र न विवक्षणीयः, किन्तु सङ्गममात्रम्। पूर्वं तु 5 तस्याभिधानं कथाक्रमेण, न शास्त्रार्थतया। अन्यथा नागरिकत्वमपि विवक्षते। सङ्गमो हि जलाशयमात्रमिति केचित्। अत्र च द्वादश्यां विष्णुपूजनं [3]प्रधानं जलादिदानं त्वङ्गम्। एवञ्च, दानमात्रे फलश्रुतिः प्रशंसाधिक्यार्था इतिश्रवणद्वादशीव्रतम्।

देवीपुराणे 10

[4]मन्त्रिवाक्यानलोत्थेन उद्योते न च सम्प्रति।
पतिर्दानवराजस्य वृताराधनमाययौ ॥
पुष्यर्के द्वादशी पुण्या सर्वपापनिवर्हिणी।
[5]कृता च सा तेन तिथिर्घृतपात्रप्रदायिना ॥
तदा प्रत्यक्षतस्तस्य देवदेवो जनार्दनः। 15
अदर्शयत्तनुं शुभ्रां पीतवासाश्चतुर्भुजः ॥

---

१ ग ब्राह्मणान् प्राप्य

२ क ङ इरावती इत्यस्मात् पूर्वम् अधिकः पाठः—ततः सङ्गमतोयेनेति द्वादश्यां स्नानानन्तरम्। ङ पुस्तके पुनः स्नानानन्तरम् तोयेन पूर्णमित्यर्थः इत्यपि अधिकः पाठः

३ क प्रधानम्.......त्वङ्गम् नास्ति

४ क मन्त्र°

५ क कृतावसानेन।

---

11–16 देवीपुराण, २.९२-९४ पाठभेदः—उद्योतितवसुं प्रति, मतिः (पतिः स्थले), निवर्हणा, कृता वा तेन सा शक्र (कृता च सा तेन तिथिः स्थले), ददर्श स्वां (अदर्शयत् स्थले)

व्रतरूपमाराधनं, तेनेदमपि व्रतम् एकादश्युपवासपूर्वकविष्णुपूजनरूपम् । घृतपूर्णपात्रदानं चाङ्गम् । पात्रपरिमाणम्

षड्विंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम् ।
मध्यमं तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम् ॥
5 वस्वङ्गुलविहीनं तु न पात्रं कारयेत् क्वचित् ॥

इति देवीपुराण एवोक्तमिति पुष्यद्वादशीव्रतम् ।

[1]मत्स्यपुराणे

आषाढादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्रेषु भोजनं दत्वा कार्त्तिक्यां गोप्रदो भवेत् ।
10 स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम् ॥

आषाढादीनि अतद्गुणसंविज्ञानबहुव्रीहिः, तेन श्रावण[2]शुक्लप्रतिपदमारभ्य कार्त्तिकीपर्यन्तं [3]चातुर्मास्यव्रतमिदम् ।

[4]भविष्यपुराणे सुमन्तुरुवाच

अशून्यशयनं नाम [5]द्वितीयं शृणु भारत ।
15 यामुपोष्य न वैधव्यं स्त्री प्रयाति [6]कदाचन ॥
पत्नीवियुक्तस्तु नरो न कदाचित् प्रजायते ।
कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ॥

---

१ ङ मात्स्ये
२ क कृष्ण°, ङ शुक्ल नास्ति
३ ख ङ चातुर्मास्य नास्ति
४ भविष्ये
५ क तृतीयां शृणु या भवेत्
६ क ख ङ नराधिप

---

5 रघुनन्दन, एकादशीतत्त्व, पृ० ३०
8-10 मत्स्यपुराण, १०१. ३७, १२ पाठभेदः—दद्यात् ( दत्वा स्थले )
14-17 भविष्यपुराण, १.२०.४, ६क ४.१५.४-५ बहव पाठभेदाः

इदमुच्चारयेत् [1]प्रातः प्रणम्य च जगत्पतिम् ।
श्रीवत्सधारिन् श्रीकान्त श्रीवास श्रीपतेऽव्यय ॥
गार्हस्थं मा प्रणाशं मे [2]यातु धर्मार्थ[3]कामदम् ।
शुचयो मा प्रणश्यन्तु मा प्रणश्यन्तु निर्जराः ॥
याम्यगा मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः । 5
लक्ष्म्या वियुज्यते देवो न कदाचिद् यथा भवान् ॥
तथा कलत्रसम्बन्धो देव मा मे [4]विमुच्यताम् ।
लक्ष्म्या न [5]शून्यं वरद यथा ते शयने सदा ॥
शय्यां समाप्य शून्यांस्तु तथात्र मधुसूदन ।
एवं प्रसाद्य पूजां तु कृत्वा लक्ष्म्यास्तथा हरेः ॥ 10
फलानि दद्याच्छक्तायामभीष्टानि जगत्पतेः ।
नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः ॥
ब्राह्मणाय द्वितीयेऽह्नि [6]शक्त्या दद्याच्च दक्षिणाम् ।
यानि तत्र महाबाहो काले सन्ति फलानि च ॥
मधुराणि च तीव्राणि न चापि कटुकानि च । 15
दातव्यानि नृपश्रेष्ट शक्त्या च शयने नृप ॥
मधुराणि च दत्वा तु मनोवल्लभतां व्रजेत् ।[7]
खर्जूरं [8]मातुलिङ्गानि स्थितेन शिरसा सह ।
फलानि शयने राजन् यज्ञभागहरस्य च ॥

---

१ क स्नातः
२ क याति
३ ग कामदा
४ क वियुज्यतां, ग °वियुज्यते
५ क शूद्रं
६ क शून्यां
७ ङ व्रजेत् इत्यतः अधिकः पाठः—तस्मात् कटुकतीव्राणि स्त्रीलिङ्गानि च वर्जयेत्
८ क मातुलुङ्गानि

---

१-१९ भविष्यपुराण, १. २० ४ ग, ६ ख, ७-१३, १६-१७, १९ बहवः पाठभेदाः
१-१० भविष्यपुराण, ४. १५. ७ क, ९-१४ क

एतान्येव तु विप्रस्य गा[1]ङ्गेयसहितानि तु।
द्वितीयेऽह्नि प्रदेयानि भक्त्या शक्त्या च भारत ॥
वासो दानं तथा धान्यं फलदानसमन्वितम्।
एवं करोति यः सम्यङ् नरो मासचतुष्ठयम् ॥
5 तस्य जन्मत्रयं वीर [2]गृहभङ्गो न जायते।
अशून्यशयनं च स्याद्धर्मकामार्थसाधकम् ॥
भवत्यव्याहतैश्वर्यः पुरुषो नात्र संशयः ॥
नारी च राजन् धर्मज्ञ वृतमेतद् यथाविधि।
या करोति न शोच्या सा वन्धुवर्गस्य जायते ॥
10 वैधव्यं दुर्भगत्वं च भर्त्तुस्त्यागं च [3]सत्तम।
नाप्नोति जन्मत्रितयमेतत् कृत्वा महाव्रतम् ॥
इत्येषा कथिता राजन् द्वितीया तिथिरुत्तमा।
यामुपोष्य नरो राजन् [4]सिद्धिं वृद्धिं श्रियो वृजेत् ॥

उपोष्येति [5]अहर्भोजनमात्रे, नक्तवृतत्वात्। शुचयोऽग्नयः, निर्जरा देवाः, 15 याम्यगाः पितरः, शय्यायां जगत्पतेरिति सम्बन्धः। [6]पूजा शय्यायामेवँ हरेः, [8]न भुञ्जीतेत्यन्वयः, [9]मत्स्यपुराणे तथा दर्शनात्। यानीत्यादिपूर्वोक्तमभीष्ठफल-कथनं, न तु [10]द्वितीयेऽप्यह्नि शय्यायां फलदानम्। अत एवाग्रिमं द्वितीयेऽह्नीति

१ ख ग सहितानि च
२ ग ग्रहभङ्गो
३ ग तथैव च (सत्तम स्थले)
४ क सिद्धिः प्रियतरो भवेत्, ख सिद्धिवृद्धिश्रियो लभेत्
५ ख ङ अहरहभोजनमात्रे
६ क पूजापि (पूजा स्थले)
७ क सलक्ष्मीकस्य हरेः
८ ङ नक्तं (न स्थले)
९ ङ मात्स्ये
१० ख द्वितीयेऽप्यह्नीति

1–13 भविष्यपुराण १. २०. २० ख, २१, क, ख, २२-२५, २८ बहवः पाठभेदाः
4–11 भविष्यपुराण, ४. १५. १९-२६ बहवः पाठभेदाः

पुनरभिधानं सार्थकं प्रथमदिनकृत्यान्तरितत्वात्। खर्जूरमातुलिङ्गादीनि[1] मधुराणीति [2]पूर्वमविशेषिताभिधानात्। स्थितेन लग्नेन, शिरसा वृत्तेन नालिकेरेणेति गौडाः। [3]तन्मते स्थितेनेति व्यर्थम्। यज्ञभागहरस्य विष्णोः। एतान्येवेत्यादिना शय्यादत्तानां फलानां ब्रह्मणे प्रतिपत्तिर्बोध्यते। गाङ्गेयं सुवर्णम् एवमित्यादिना श्रावणकृष्णाद्वितीयायामतिदिश्यते। तेन मासचतुष्टये व्रतमिदम् इति अशून्यशयनद्वितीया। 5

[4]मत्स्यपुराणे—ब्रह्मोवाच

भगवन् पुरुषस्येह स्त्रियाश्च विरहादिकम्।
शोकव्याधिभयं दुःखं न भवेद् येन तद्वद॥

श्रीभगवान् उवाच 10

श्रावणस्य द्वितीयायां कृष्णायां [5]मधुसूदनः।
क्षीरार्णवे सपत्नीकः सदा वसति [6]केशवः॥
तस्यां सम्पूज्य गोविन्दं सर्वान् कामान् समश्नुते।
गोभूहिरण्यदानादि सप्तकल्पशतानुगम्।
अशून्यशयनं नाम द्वितीया सम्प्रकीर्त्तिता॥ 15
तस्यां सम्पूजयेद्विष्णुमेभिर्मन्त्रैर्विधानतः।
श्रीवत्सधारिन् श्रीकान्त [7]श्रीवास श्रीपतेऽव्यय॥
गार्हस्थ्यं मा प्रणाशं मे यातु [8]धर्मार्थकामदम्।
अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम॥

---

१ ग मातुलुङ्गादीनि विशेषप्रदर्शनम्, ङ मातुलिङ्गादीनीति विशेषप्रदर्शनम्
२ क पूर्वमशेषिताभिधानात्
३ क तन्मध्ये
४ ङ मात्स्ये
५ ख ङ मधुसूदन
६ ङ केशव
७ क श्रीनिवास श्रियां पते
८ ङ धर्मार्थकामद

---

8-10 (पृ० १२३) मत्स्यपुराण, ७१·२-२० पाठभेदः—श्रीधामन् (श्रीवासस्थले),

पितरो मा प्रणश्यन्तु मास्तु दाम्पत्यभेदनम् ।
लक्ष्म्या वियुज्यते देवो न कदाचिद् यथा हरिः ।
तथा कलत्रसम्बन्धो देवो मा मे [1]वियुज्यताम् ॥
लक्ष्म्या न शून्यं वरद तथा ते शयनं सदा ।
5 शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥
गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् ।
घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः ॥
एवं सम्पूज्य गोविन्दमश्नीयात्तैलवर्जितम् ।
नक्तमक्षारलवणं [2]यावत्तत्स्याच्चतुष्टयम् ॥
10 ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् ।
दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणाम्[3] ॥
पादुकोपानहच्छत्रचामरासनसंयुताम् ।
अभीष्टोपस्करैर्युक्तां [4]शुक्लपुष्पाम्बरावृताम् ॥
[5]सोपधानकविश्रामां फलैर्नानाविधैर्युताम् ।
15 तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् ॥
अव्यङ्गाय च विप्राय वैष्णवाय कुटुम्बिने ।
दातव्या वेदविदुषे [6]न च कुप्येत कस्यचित् ॥
[7]तत्रोपवेश्य दाम्पत्यमलंकृत्य विधानतः ।
पत्न्यास्तु भोजनं दद्याद् भक्ष्यभोज्यसमन्वितम् ॥

---

१ ख ङ विमुच्यताम्
२ क यावत्तस्याश्चतुष्टयम्
३ क विचक्षणः ( विलक्षणां स्थले )
४ ग रक्तपुष्पाम्बरावृताम्
५ ग सोपानधान (सोपधानक स्थले)
६ ख न कुप्येत च
७ ङ तत्रोपविश्य

---

देव (देवो स्थले), भवान् (हरिः स्थले), शून्यो वरद शय्यां त्वं शयनं गतः, कीर्त्तयेत्, अव्यङ्गाङ्गाय (अव्यङ्गाय च स्थले), भावेनापतिताय च (न ...... कस्यचित् स्थले), तत्रोपविश्य

ब्राह्मणस्यापि [1]सौवर्णीमुपस्करसमन्विताम् ।
प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ॥
एवं यस्तु पुमान् कुर्यादशून्यशयनं हरेः ।
वित्तशाठ्येन रहितो नारायणपरायणः ॥
न तस्य [2]पत्नीविरहः कदाचिदपि जायते ।                5
नारी वा विधवा ब्रह्मन् यावच्चन्द्रार्कतारकम् ॥
न विरूपं न [3]शोकार्त्तं दाम्पत्यं जायते क्वचित् ।
न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ॥
सप्तकल्पसहस्राणि सप्तकल्पशतानि च ।
कुर्वन्नशून्यशयनं विष्णुलोके महीयते ॥                10

विष्णुं सलक्ष्मीकं, पूर्वं सलक्ष्मीकस्य [4]कीर्त्तनात्, मन्त्रलिङ्गात्, [5]भविष्ये च दर्शनात् । स्त्रिया क्रियमाणे व्रते कलत्रपदस्थाने पतिपदोहेन [6]मन्त्रपाठ इति केचित्, [7]तदयुक्तं । पुरुषश्च स्त्रिया चेति प्रक्रमाद् युगपद्विधौ प्रकृतिविकाराभावात्[8] । अत एव बहुपत्नीकयजमानप्रयोगेऽपि [9]पत्नीं संनह्येति मन्त्रः एकवचनान्त एव इत्युक्तम् । अतः स्त्रिया अपि कलत्रपदवानेव मन्त्रः 15 प्रयोज्यः । [10]यावत्तत्स्याच्चतुष्टयमिति कृष्णाद्वितीयाचतुष्टयं यावदित्यर्थः । ततः [11]प्रभातः इत्यादिना चतुर्थीद्वितीयानन्तरितदिवसे शय्यादानमित्युक्तम् ।

---

१ ख ङ सौवर्णम्
२ ङ पत्न्या विरहः
३ क शोकार्त्ति
४ ख ङ कथनात्
५ ख भविष्ये दर्शनाच्च
६ ख ङ मन्त्र नास्ति
७ तदयुक्तं नास्ति
८ ङ विकाराभावात् इतः परम् ऊहाभावः शय्योपस्करादिनान्तरप्रतिमादानं न तु शय्यया सहैव दानम्, इति अधिकः पाठः
९ विपत्नीं (पत्नीं स्थले)
१० क यावत्तस्याश्चतुष्टयम्
११ क प्रभाव

---

पत्न्या विरहः, विरूपो न न शोकार्त्तो दम्पती भवतः क्वचित्

[1]भविष्यपुराणे शय्यादानं नोक्तं व्रतदक्षिणा च मासचतुष्टयेऽप्युक्तेति तत्कल्पान्तरं फलापकर्षाच्च। लक्ष्मीपतिसमन्वितां[2] लक्ष्मीसहितविष्णुप्रतिमा यत्राधिवासिता [3]तामित्यर्थः। न तु प्रतिमायुक्ताया एव प्रथमं दानं प्रतिमादानस्याग्रे विधानात्। अभीष्टोपस्करैर्युक्तामिति उपस्करपदं शय्योपकरणपरम्।
5 उपस्करसमन्वितामिति उपस्करपदं पूजोपकरणपरम्। कुण्डमण्डपादिविधौ चात्र न प्रमाणमिति [4]प्रकारान्तरेणाशून्यशयनव्रतम्।

अथ नानादेवव्रतानि ॥ तत्र

[5]मत्स्यपुराणे

ब्रह्माणं काञ्चनं कृत्वा तिलराशिसमन्वितम्।
10 त्र्यहं तिलव्रतो भूत्वा वह्निं संपूज्य च द्विजान् ॥
संपूज्य द्विजदाम्पत्यं माल्यवस्त्रविभूषणैः।
[6]शक्तितस्त्रिपलादूर्ध्वं विश्वात्मा प्रीयतामिति ॥
पुण्येऽह्नि दद्यात् स परं ब्रह्म [7]यात्यपुनर्भवम्।
एतद् ब्रह्मव्रतं नाम निर्वाणफलदं नृणाम् ॥

15 तिलव्रतस्तिलाहारः। वह्निसन्तर्पणादि [8]च चतुर्थदिने, अर्थात् पुण्यत्वमपि तस्यैवानुसन्धयम्। दद्याद् ब्राह्मणमित्यर्थः। त्रिपलादूर्ध्वमित्यपि ब्रह्मविशेषणं विप्रदाम्पत्याय च तद् दानं प्रकृतत्वात्।

---

१ ङ भविष्ये
२ क समन्वितामिति
३ ख ताम् नास्ति
४ ख ङ प्रकारान्तरेण नास्ति
५ ङ मात्स्ये
६ क भक्तित
७ क याति न पुनर्भवम्
८ क च नास्ति

---

9–14 मत्स्यपुराण, १०१.४६-४८ पाठभेदः— ब्रह्माण्डं, त्र्यहं तिलप्रदो भूत्वा, वह्निं सन्तर्प्य सद्विजम्, निर्वाणपददायकं (निर्वाणफलदं नृणाम् स्थले)

यश्चेन्धनानि विप्राय वर्षादिचतुरो ऋतून् ।
घृतधेनुप्रदाता[1] च स परं ब्रह्म गच्छति ॥
[2]वैश्वानरं व्रतं नाम सर्वपापप्रणाशनम् ॥

इन्धनानि ददातीति शेषः ।

प्रतिपद्येकभक्ताशी समान्ते कपिलाप्रदः । 5
वैश्वानरं पदं याति शिखिव्रतमिदं स्मृतम् ॥

शिखी अग्निः ।

हैमं पलद्वयादूर्ध्वं रथमश्वयुगान्वितम् ।
दद्यात् कृतोपवासश्च दिवि कल्पशतं वसेत् ।
कल्पान्ते [3]राजराजः स्यात् [4]अग्निव्रतमिदं स्मृतम् ॥ 10
आकाशशायी वर्षासु दद्यादन्ते[5] पयस्विनीम् ।
शक्रलोके वसेत् कल्पमिदमिन्द्रव्रतं स्मृतम् ॥

आकाशं हिन्दोलादि, [6]अनावृतदेशो वा ।

---

१ ग प्रदाने (प्रदाता स्थले)
२ क वैश्वानर......कपिलाप्रदः (5) नास्ति
३ क राजराजा
४ ख ङ असि (अग्नि स्थले)
५ ङ इदमिन्द्रव्रतमिदं स्मृतम्
६ क अनावृतदेशे

---

1–3 मत्स्यपुराण, १०१. ५७ पाठभेदः—
विप्रायेन्धनदो यस्तु वर्षादिचतुरो ऋतून्, घृतधेनुप्रदोऽन्ते ( घृतधेनुप्रदाता स्थले )

5–6 मत्स्यपुराण, १०१. ८२ पाठभेदः—वैश्वानरपदं

8–10 मत्स्यपुराण, १०१. ७१ पाठभेदः—ददत्, कृतोपवासः स्यात्, अश्वव्रतमिदं स्मृतम्

11–12 मत्स्यपुराण, १०१.६६ पाठभेदः—धेनुमन्ते (दद्यादन्ते स्थले), नित्य-मिन्द्रव्रतमिद

निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत् ।
बारुणं लोकमाप्नोति वारुणं व्रतमुच्यते ॥
[1]चान्दायणं तु यः कुर्याद्धैमं चन्द्रं निवेदयेत् ।
चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकफलप्रदम् ॥
5 त्रिसन्ध्यं पूज्य दाम्पत्यमुपवासी विभूषणैः ।
ददद् गां समवाप्नोति मोक्षमिन्द्रव्रतादिह[2] ॥
दत्वा सितद्वितीयायामिन्दोर्लवणभाजनम् ।
[3]समान्ते गोप्रदो याति विप्राय शिवमन्दिरम्[4] ॥
कल्पान्ते राजराजः स्यात् सोमव्रतमिदं स्मृतम् ॥

10 [5]अत्र योगीश्वरः

नक्तभोजनं चन्द्रोदये दानं, भाजनं ताम्रं, लवणसंभृतम्,[6] कार्त्तिकतृतीयायामारम्भमाह[7] ।

[8]भविष्यपुराणे--सुमन्तुरुवाच

सोमव्रतं तथा चान्यच्छंकरप्रीतये शृणु ।
15 ताम्रपात्रं पयःपूर्णं कृत्वा तत्स्थं च शंकरम् ॥
प्रच्छाद्योपरि वस्त्रेण गन्धपुष्पार्चितं महत् ।
शिवभक्ते द्विजे दद्याद् भोजयित्वा विधानतः ॥
प्राच्यां समुद्गते सोमे प्रतीच्यां च रवौ गते ।
पौर्णमास्यां तु वैशाख्यां गृह्य पात्रं शिवाग्रतः ॥

---

१ क इन्द्रायणं (चान्द्रायणं स्थले)
२ व्रतादिह अस्मात् परं ख ग ङ पुस्तके अधिकः पाठः—इति त्रिसन्ध्यव्रतम्
३ क समाप्तौ, ख मासान्ते
४ °मन्दिरे
५ ग अत्र नास्ति
६ ख सघृतम्, ग संवृतम् (संभृतं स्थले)
७ क आरम्भः शेषमाह, ङ आरम्भविशेषमाह
८ ङ भविष्ये

---

1–2 मत्स्यपुराण, १०१. ७४ पाठभेदाः—वरुणव्रतमुच्यते
3–5 मत्स्यपुराण, १०१. ७६
7–9 मत्स्यपुराण, १०१.८१

प्रीयतां मे महादेवः सोममूर्त्तिर्जगत्पतिः ।
तस्मै द्विजाय तत् पात्रमर्पयेद् भक्तितः शनैः ॥
एतत् सोमव्रतं नाम कृत्वा सोमान्तिकं व्रजेत् ।
रुद्रलोकात् परिभ्रष्टो भवेज्जातिस्मरो[1] नरः ॥
पूर्वाभ्यासेन तेनैव ततः शिवपुरं व्रजेत् । 5

[2]महत् पात्रमित्यन्वयः ।

[3]मत्स्यपुराणे

पुष्यादौ तु त्रयोदश्यां कृत्वा [4]नक्तं मधौ पुनः ।
अशोकं काञ्चनं दद्यादिक्षुयुक्तं दशाङ्गुलम् ॥
विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति । 10
कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात् पुन र्नृप ॥
एतत् कामव्रतं नाम सदाशोकविनाशनम् ॥

पुष्यादौ पौषादारभ्य, मधौ चैत्रे, एवं मासचतुष्टये शुक्लत्रयोदश्यां व्रतमिदम् ।
[5]वराहपुराणे

त्रयोदश्यां तु नक्तेन धर्मव्रतमिहोच्यते । 15
शुक्लपक्षे फाल्गुनस्य तच्चारब्धं विचक्षणैः ॥

इदं [6]वात्सरव्रतं पापक्षयफलं च ।

१ क °स्मृतो (°स्मरो स्थले)
२ क महाताम्र°
३ ङ मात्स्ये, ग मत्स्यपुराणे इत्यतः प्राक् इति प्रकरान्तरेण सोमव्रतम् अधिकः पाठः
४ ख चैत्रे (नक्तं स्थले)
५ ङ वाराहे
६ ख ङ वत्सर

8–12 मत्स्यपुराण, १०१ ९-१० पाठभेदः—यः (तु स्थले), विष्णुपदे (विष्णुपुरे स्थले), नर (नृप स्थले)

15–16 वराहपुराण, ६५.९ ख-१०क पाठभेदः—अथ (इह स्थले), तथारभ्य

अथ नागव्रतानि ।

तत्र [1]भविष्यपुराणे

श्रावणे मासि सप्तम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ॥
पूजयेद् विधिवद् द्वारि दधिदूर्वाङ्कुरैः कुशैः ।
5 गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां [2]सर्पतो वीर भयं भवति कुत्रचित् ॥

इति [3]सर्पाभयपञ्चमी । सुमन्तुरुवाच

तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
10 यस्त्वालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः ।
पूजयेद् गन्धपुष्पैस्तु सर्पिपायसगुग्गुलैः ।
तस्य तुष्टिं समायान्ति [4]पन्नगास्तक्षकादयः ।
आ सप्तमात् कुलादस्य न भयं नागतो भवेत् ॥

इत्यालेख्यपञ्चमी । [5]मत्स्यपुराणे

15 पञ्चमी या तिथिस्त्व[6]न्या सर्वपापहरा शुभा ।
एतस्यां सर्वतो यस्तु कट्वम्लं परिवर्जयेत् ।
क्षीरेण स्नापयेन्नागान् [7]ते तु यास्यन्ति मित्रताम् ॥

---

१ च भविष्ये
२ ख सर्वतो
३ क सर्पभय°
४ क पन्नग°
५ ङ मात्स्ये, ग ब्रह्मपुराणे
६ क धन्या
७ क ये

---

9–13 भविष्यपुराण, ४.३६.५४. पाठभेदः—तद्वद् (तथा स्थले), सर्पिगुग्गुलपायसैः, कुलात्तस्य

इति नागमित्रपञ्चमी । अत्र च अनन्त-वासुकि-तक्षक-[1]कर्कोटक-[2]पद्म-महापद्म-शङ्खपाल-कुलिका अष्टनागा वराहपुराणे कथिताः ।

भविष्ये [3]तु

वासुकिस्तक्षकश्चैव [4]कालियो मणिभद्रकः ।
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ । 5
एते भयं प्रयच्छन्ति प्राणिनां [5]प्राणजीविनाम् ॥
पञ्चम्यां स्नापयन्तीह नागान् क्षीरेण ये नराः ।
तेषां कुले प्रयच्छन्ति अभयं प्राणदक्षिणाम् ॥

इति अष्टौ नागाः कथिताः ।

अथ देवीव्रतानि । 10

तत्र [6]वराहपुराणे—अगस्त्य उवाच

अतः परं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् ।
येन भीरोरपि महत् शौर्यं भवति तत्क्षणात् ॥
मासि चाश्वयुजे शुद्धा नवमी समुपोषिता ।
सप्तम्यां कृतसंकल्पः स्थित्वाष्टम्यां निरोदनः ॥ 15
नवम्यां [7]प्राशयेत् पिष्टं प्रथमं भक्तितो नृपः ।

---

१ क कर्कोट
२ क ख पद्म नास्ति
३ ङ तु नास्ति
४ ङ मालेयो
५ क प्राणजीवनं
६ ङ वाराहे
७ क नाशयेत्

---

4–8 भविष्यपुराण, ४. ३६. २क–३ पाठभेदः—कालिको माणिभद्रकः, धृतराष्ट्रो रैवतश्च, प्रयच्छन्त्यभयं, स्नपयन्तीह, प्राणिनां सदा (प्राणदक्षिणाम् स्थले)

4–5 रघुनन्दन, कृत्यतत्त्व, पृः ४३७ पाठभेदः—कालीयो

12–8 (पृ० १३०) वराहपुराण, ६४. १–६ पाठभेदाः— अथापरं, शुद्धां नवमीं, समुपोषयेद् नृप,

ब्राह्मणान् भोजयेद्द भक्त्या देवीं[1] तु प्रतिपूजयेत् ।
दुर्गादेवीं[10] महाभागां[2] महामायां[3] महाप्रभाम्[4] ॥
एवं संवत्सरं यावद्द उपोष्य तु विधानतः ।
व्रतान्ते भोजयेद्द विप्रान् यथाशक्त्या कुमारिकाः ॥
5 हेमवस्त्रादिभिस्तात भूषयित्वा स्वशक्तितः ।
पश्चात् समापयेत् तास्तु देवी मे प्रीयतामिति ॥
एवं कृते भ्रष्टराज्यो लभेद्द राज्यं न संशयः ।
अविद्यो लभते विद्यां भीरुः शौर्यं च विन्दति ॥

शुद्धा शुक्ला, तेन शुक्लानवमीमात्रे संवत्सरव्रतमिदम्। निरोदनः
10 निराहारः पूर्वापरयोरुपवासाभिधानात्[5]। निरोदनः निराहारः इति[6]
ओदनपदाहारपरत्वस्य भविष्ये दर्शनात्। नवमी समुपोषितेति नवमी
व्रतत्वख्यापनार्थं, अन्यथा पिष्टप्राशनविरोधात्[7]। एवमन्यत्रापि। एकादश्यु-
पवासपूर्वकद्वादशीकालीन[8]विष्णुपूजात्मकद्वादशीव्रते[9] द्वादशी समुपोषितेति
[10]बहुशोऽभिधानात्। [11]वराहपुराणे अन्येति समुपोषितेति वर्णयन्ति।
15 तन्मते निरोदनपदात् ओदनव्यतिरिक्तस्य भक्षणमिति शौर्यव्रतानि।

---

१ क देवी
२ क भागा
३ क माया
४ क प्रभा
५ ग °विधानात्, ख °क्षविधानात्
६ ग इति अस्मात्परं यावत् अधिकः पाठः
७ ग विध्यनुरोधात् ( विरोधात् स्थले )
८ क द्वादशीव्रतकालीन°
९ ग द्वादशीव्रते नास्ति
१० क बहुशोऽभिधानम्, ख बहुशो विधानम्
११ ङ वाराहे

---

देवीं चैव तु पूजयेत्, उपोष्येति, धीमान्, स्तात्तु (स्तात स्थले), तु भक्तितः,
तान्तु, भीतः (भीरुः स्थले)

नवम्यां नववर्षाणि राजन् पिष्टाशनो भवेत् ।
तस्य तुष्टा भवेद् देवी सर्वकामप्रदा शुभा ।
अग्निपक्वमभुञ्जानो यावज्जीवं व्रती भवेत् ॥

[1]नवम्यामेव प्रक्रमाद् [2]वरदा देवीति सम्बन्धः। इदं व्रतद्वयं [3]पक्षद्वयेऽपि विशेषानभिधानात् । 5

अष्टम्यां च नवम्यां च पक्षयोरुभयोरपि ।
योऽब्दमेकं न भुञ्जीत चण्डिकाराधने रतः ।
स याति परमं स्थानं यत्र सा चण्डिका स्थिता ॥

[4]मत्स्यपुराणे

[5]नवम्यामेकभक्तस्तु कृत्वा कन्याश्च शक्तितः । 10
भोजयित्वा समां दद्याद्धेमकञ्चुकवाससी ॥
[6]एवं [7]सिंहं च विप्राय दत्वा शिवपुरं व्रजेत् ।
जन्मार्बुदं स्वरूपः स्याच्छत्रुभिश्चापराजितः ।
एतद् वीरव्रतं नाम नारीणां च सुखप्रदम् ॥

समा वर्षं, तदन्ते हेमकञ्चुकवासश्च कन्याभ्य एव देयम्, हेमसिंहमात्रं विप्राय । 15

---

१ ग भवेत् अस्मात् परं इह चामुत्र वरदा तस्यानन्तफलं भवेत् अग्निपक्वमभुञ्जानो यावज्जीवम् अधिकः पाठः
२ ख ङ दुर्गा
३ ग व्रत° ( पक्ष° स्थले )
४ ङ मात्स्ये
५ क नवम्यामेव भुञ्जीत
६ ङ हैमं ( एवं स्थले )
७ ख हैमं ( सिंहं स्थले)

---

10–14 मत्स्यपुराण, १०१. २७–२८ पाठभेद :— भक्तं तु, भोजयित्वासनं, हैम° (हेम° स्थले), हैमं ( एवं स्थले ), शिवपदं, सुरूपः

देवीपुराणे—ब्रह्मोवाच

गौरीं [1]कालीमुमां दुर्गां भद्रां [2]कान्तिं सरस्वतीम् ।
मङ्गलां वैष्णवीं लक्ष्मीं शिवां नारायणीं क्रमात् ॥
मार्गतृतीयामारभ्य पूजयन् स्वर्गभाग् भवेत् ।
5 अर्धनारीश्वरं रुद्रम् अथवा ताम्रशङ्करम् ॥
पूजयेद् विधिवन् नारी न वियोगमवाप्नुयात् ।
अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा ।
शंकरं वामभागस्थं सर्वान् कामानवाप्नुयात् ॥

अथवा विष्णुरूपेणेत्यादिना हरिहरमूर्तिपूजाकथनम्[3] । [4]अत्र प्रथममन्तिमं 10 व्रतं च सर्वाधिकारकम्, मध्यमं व्रतद्वयमर्धनारीश्वरमित्यादिना [5]कथितम् । [6]स्त्रीमात्राधिकारकं व्रतचतुष्टयमपि चैतत् । [7]शुक्लतृतीयायां [8]नक्तोपवासादौ चात्र न प्रमाणं किन्तु पूजारूपाण्येतानि[9] व्रतानि । तथा

[10]माघमासे तु संप्राप्य चतुर्थी कुन्दसंज्ञिता ।
15 सा उपोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति ॥
सर्वोपहारसम्पन्नः सर्वोपस्करमाहरेत् ।
कुन्दं पत्रं फलं शाकं लवणं गुडशर्कराम् ॥

---

१ ग देवीं (कालीं स्थले)
२ क ग ङ कालीं (कान्तिं स्थले)
३ ग मूर्ति नास्ति
४ क अत्र......कथितम् नास्ति
५ ङ कथनम्
६ ग स्त्रीमात्राधिकारमेव
७ ग शुक्लतृतीयायामेव
८ क उपवासनक्तादौ
९ ग एतान्येव
१० क माघ नास्ति

---

**2-8** देवीपुराण, ७९. १-३ पाठभेदः— गौरीम् इत्यतः नारायणीम् इत्यन्तं सर्वं पदं प्रथमाविभक्त्यन्तम् एकवचनं च, भद्रा दुर्गा, पूर्वोक्तं लभते फलम् (पूजयन्.......भवेत् स्थले ), उमा (ताम्र स्थले), सर्वकाममवाप्नुयात्

षण्डजीरककुस्तुम्बद्रव्याणि विविधानि च।
दातव्यानि सुरश्रेष्ठ कन्यकानां तु भक्तितः ॥
सूर्यपात्रं तथा भाण्डं मृन्मयानि विशेषतः।
उद्दिश्य दापयेत् देव्यै प्रीयतां मे [1]सदा इति ॥
अनेन विधिना [2]कार्यं सौभाग्यं पुत्रसन्ततिः। 5
वर्द्धते नात्र सन्देहो नान्यथा मम भाषितम् ॥

[3]उपहारस्तु [4]देवीनां पूजोपकरणद्रव्याणि।

तेन देवीपूजानन्तरं दानम् उपस्करः कुन्दादिरेव। कुस्तुम्बो धान्यकम्, अत्र चोपवासे [5]राज्यफलम्। अग्रिमकर्माणि च[6] सौभाग्यादीनीति व्यवस्थाश्रवणाच्च बोद्धव्यम् इति कुन्दचतुर्थीव्रतम्[7]। 10

[8]मत्स्यपुराणे

वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षुकान्।
दद्याद् वस्त्राणि सूक्ष्माणि रसपात्रैर्युतानि च ॥
संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति।
एतद् गौरीव्रतं नाम भवानीलोकदायकम् ॥ 15

[9]इति गौरीव्रतम्। [10]रसपात्रैर्दध्यादिपात्रैः, मिथुनं दाम्पत्यम्।

---

१ क सदेतिह
२ ङ शक्र (कार्यं स्थले)
३ क उपहारो
४ ख देवानां
५ क ख राजफलम्
६ क च नास्ति
७ ग व्रतम् नास्ति
८ ङ मात्स्ये
९ क ख ङ इति गौरीव्रतम् नास्ति
१० क ग रस......दाम्पत्यम् नास्ति

---

12-15 मत्स्यपुराण, १०१. ७-८ पाठभेद :—घृतेक्षवम्, रसपात्रैश्च संयुतम्

फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत्।
समान्ते शयनं दद्याद् गृहं चोपस्करान्वितम् ॥
सम्पूज्य विप्रमिथुनं भवानी प्रीयतामिति।
गौरीलोके वसेन्नित्यं सौभाग्यव्रतमुच्यते ॥

शुक्लतृतीयामात्रे व्रतमिदम्। गौरी चात्र देवता। [2]अत्र व्रते [3]तृतीया-व्रतान्तरधर्मातिदेशान् नक्तादिलाभ इति योगीश्वरः। तदयुक्तं, बहूनां [4]तृतीया-व्रतानां सधर्मकत्वाद् [6]दर्वीहोमवदनतिदेशात्। [7]एवमन्यत्राप्यनतिदेश उह्यः।

लक्ष्मीमभ्यर्च्य पञ्चम्याम् उपवासी भवेन्नरः।
समान्ते हेमकलसं दद्याद् हेमसमन्वितम् ॥
[8]स वैष्णवपदं याति लक्ष्मीः स्याज्जन्मजन्मनि।
एतल्लक्ष्मीव्रतं नाम सदा [9]पातकनाशनम् ॥
[10]पयस्विनीं समान्ते तु दद्याद् विप्राय गोयुगम्।
लक्ष्मीलोके वसेत् कल्पमेतद् देवीव्रतं स्मृतम् ॥
सन्ध्यामौनं नरः कृत्वा समान्ते घृतकुम्भकम्।
वस्त्रयुग्मतिलप्रस्थं ब्राह्मणाय निवेदयेत् ॥

१ क कल्पं ( नित्यं स्थले )
२ घ अत्र देवताव्रते
३ घ ङ तृतीया...बहूनां नास्ति
४ ख व्रतान्तर.......तृतीया नास्ति
५ ग तृतीया नास्ति
६ ग द्रव ( दर्वी स्थले )
७ ख एवमन्यान्यतिदेश
८ घ सर्वैष्णवपदप्राप्तिः
९ ग घ ङ पापविनाशनम्
१० ङ यशस्विनीं

1–4 मत्स्यपुराण, १०१. १५–१६ पाठभेदः— फाल्गुन्यादि, समाप्ते, कल्पं (नित्यं स्थले)

8–11 मत्स्यपुराण, १०१. १९–२० पाठभेदः—हेमकमलं, धेनुसमन्वितम्, लक्ष्मीवान् (लक्ष्मीः स्यात् स्थले), संपद्व्रतं, पापविनाशनम्

12–18 मत्स्यपुराण, १०१. ५९ पाठभेदः—पायसाशी (पयस्विनीं स्थले), लक्ष्मीलोकमवाप्नोति ह्येतद्देवीव्रतं स्मृतम्

[1]सारस्वतपदं याति पुनरावृत्तिदुर्लभम् ।
एतत् सारस्वतं नाम रूपविद्याप्रदायकम् ॥

सन्ध्या प्रातः अर्द्धोदितादित्यात् प्राक् दण्डद्वयम्। सायं चास्तमितादूर्ध्वम्। लोकास्तु सायंसन्ध्यामात्रे मौनमाचरन्ति नक्षत्रदर्शनानन्तरं च वाचं विसृजन्ति। 5

अथ सामान्यव्रतानि ।

तत्र [2]नरसिंहपुराणे

पौर्णमास्याममावस्यामेकभक्तं समाचरेत् ।
तत्रैकभक्तं कुर्वाणः पुण्यां गतिमवाप्नुयात् ॥

[3]स्कन्दपुराणे 10

कार्त्तिकं त्वपि यो मासमेकभक्तेन तिष्ठति ।
सोऽश्वमेधफलं प्राप्य वह्निलोके महीयते ॥

अत्राग्निरे[4]व देवता, 'मासः कार्त्तिकोऽग्निदैवत्य' इति [5]विष्णुवचनात्। वह्निलोके महीयत [6]इत्यर्थवादस्वरसाच्चेति वदन्ति [7]इति कार्त्तिकैकभक्तव्रतम्। 15

तथा

माघमासे तु कुर्वाणः स्त्रियं प्राप्नोति वै प्रियाम् ।

---

१ घ ङ सारस्वतं
२ घ ङ नारसिंहे
३ घ ङ स्कान्दे
४ ग एव नास्ति
५ ख ङ विष्ण° नास्ति
६ क इत्यनुवाद°
७ क ख घ ङ इति.....व्रतं नास्ति

---

14 (पृ० १३४)-2 मत्स्यपुराण, १०१. १७-१८ पाठभेदः—ततः (नरः स्थले), वस्त्रयुग्मं, तिलान् घण्टां, सारस्वतं
8-9 नरसिंहपुराण, ६७. ५ पाठभेदः—पूर्णमास्याम्
13 विष्णुसंहिता, ८९.१

फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत् ।
समान्ते शयनं दद्याद् गृहं चोपस्करान्वितम् ॥
सम्पूज्य विप्रमिथुनं[1] भवानी प्रीयतामिति ।
गौरीलोके वसेन्नित्यं सौभाग्यव्रतमुच्यते ॥

5 शुक्लतृतीयामात्रे व्रतमिदम् । गौरी चात्र देवता । [2]अत्र व्रते [3]तृतीया-[4]व्रतान्तरधर्मातिदेशान् नक्तादिलाभ इति योगीश्वरः । तदयुक्तं, बहूनां [5]तृतीया-व्रतानां सधर्मकत्वाद् [6]दर्वीहोमवदनतिदेशात् । [7]एवमन्यत्राप्यनतिदेश उह्यः ।

लक्ष्मीमभ्यर्च्य पञ्चम्याम् उपवासी भवेन्नरः ।
समान्ते हेमकलसं दद्याद् हेमसमन्वितम् ॥
10 [8]स वैष्णवपदं याति लक्ष्मीः स्याज्जन्मजन्मनि ।
एतल्लक्ष्मीव्रतं नाम सदा [9]पातकनाशनम् ॥
[10]पयस्विनीं समान्ते तु दद्याद् विप्राय गोयुगम् ।
लक्ष्मीलोके वसेत् कल्पमेतद् देवीव्रतं स्मृतम् ॥
सन्ध्यामौनं नरः कृत्वा समान्ते घृतकुम्भकम् ।
15 वस्त्रयुग्मतिलप्रस्थं ब्राह्मणाय निवेदयेत् ॥

---

१ क कल्पं ( नित्यं स्थले )
२ घ अत्र देवताव्रते
३ घ ङ तृतीया...बहूनां नास्ति
४ ख व्रतान्तर.......तृतीया नास्ति
५ ग तृतीया नास्ति
६ ग द्रव ( दर्वी स्थले )
७ ख एवमन्यान्यतिदेश
८ घ सवैष्णवपदप्राप्तिः
९ ग घ ङ पापविनाशनम्
१० ङ यशस्विनीं

---

1–4 मत्स्यपुराण, १०१. १५–१६ पाठभेदः— फाल्गुन्यादि, समाप्ते, कल्पं (नित्यं स्थले )

8–11 मत्स्यपुराण, १०१. १९–२० पाठभेदः—हेमकमलं, धेनुसमन्वितम्, लक्ष्मीवान् (लक्ष्मीः स्यात् स्थले), संपद्व्रतं, पापविनाशनम्

12–13 मत्स्यपुराण, १०१. ५९ पाठभेदः—पायसाशी (पयस्विनीं स्थले), लक्ष्मीलोकमवाप्नोति ह्येतद्देवीव्रतं स्मृतम्

[1]सारस्वतपदं याति पुनरावृत्तिदुर्लभम् ।
एतत् सारस्वतं नाम रूपविद्याप्रदायकम् ॥

सन्ध्या प्रातः अर्द्धोदितादित्यात् प्राक् दण्डद्वयम्। सायं चास्तमितादूर्ध्वम् । लोकास्तु सायंसन्ध्यामात्रे मौनमाचरन्ति नक्षत्रदर्शनानन्तरं च वाचं विसृजन्ति। 5

अथ सामान्यव्रतानि ।

तत्र [2]नरसिंहपुराणे

पौर्णमास्याममावस्यामेकभक्तं समाचरेत् ।
तत्रैकभक्तं कुर्वाणः पुण्यां गतिमवाप्नुयात् ॥

[3]स्कन्दपुराणे 10

कार्त्तिकं त्वपि यो मासमेकभक्तेन तिष्ठति ।
सोऽश्वमेधफलं प्राप्य वह्निलोके महीयते ॥

अत्राग्निरे[4]व देवता, 'मासः कार्त्तिकोऽग्निदैवत्य' इति [5]विष्णुवचनात्। वह्निलोके महीयत [6]इत्यर्थवादस्वरसाच्चेति वदन्ति [7]इति कार्त्तिकैकभक्तव्रतम्। 15

तथा

माघमासे तु कुर्वाणः स्त्रियं प्राप्नोति वै प्रियाम् ।

१ घ ङ सारस्वतं
२ घ ङ नारसिंहे
३ घ ङ स्कान्दे
४ ग एव नास्ति
५ ख ङ विष्ण° नास्ति
६ क इत्यनुवाद°
७ क ख घ ङ इति.....व्रतं नास्ति

14 (पृ० १३४)–2 मत्स्यपुराण, १०१. १७-१८ पाठभेदः– ततः (नरः स्थले), वस्त्रयुग्मं, तिलान् घण्टां, सारस्वतं
8–9 नरसिंहपुराण, ६७. ५ पाठभेदः—पूर्णमास्याम्
13 विष्णुसंहिता, ८९.१

देवीपुराणे — ब्रह्मोवाच

गौरीं [1]कालीमुमां दुर्गां भद्रां [2]कान्तिं सरस्वतीम् ।
मङ्गलां वैष्णवीं लक्ष्मीं शिवां नारायणीं क्रमात् ॥
मार्गतृतीयामारभ्य पूजयन् स्वर्गभाग् भवेत् ।
5 अर्धनारीश्वरं रुद्रम् अथवा ताम्रशङ्करम् ॥
पूजयेद् विधिवन् नारी न वियोगमवाप्नुयात् ।
अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा ।
शंकरं वामभागस्थं सर्वान् कामानवाप्नुयात् ॥

अथवा विष्णुरूपेणेत्यादिना हरिहरमूर्ति[3]पूजाकथनम् । [4]अत्र प्रथममन्तिमं 10 व्रतं च सर्वाधिकारकम्, मध्यमं व्रतद्वयमर्धनारीश्वरमित्यादिना [5]कथितम् । [6]स्त्रीमात्राधिकारकं व्रतचतुष्टयमपि चैतत् । [7]शुक्लतृतीयायां [8]नक्तोपवासादौ चात्र न प्रमाणं किन्तु पूजारूपाण्ये[9]तानि व्रतानि । तथा

[10]माघमासे तु संप्राप्य चतुर्थी कुन्दसंज्ञिता ।
15 सा उपोष्या सुरश्रेष्ठ ततो राज्यं भविष्यति ॥
सर्वोपहारसम्पन्नः सर्वोपस्करमाहरेत् ।
कुन्दं पत्रं फलं शाकं लवणं गुडशर्कराम् ॥

---

१ ग देवीं (कालीं स्थले)
२ क ग ङ कालीं (कान्तिं स्थले)
३ ग मूर्ति नास्ति
४ क अत्र······कथितम् नास्ति
५ ङ कथनम्
६ ग स्त्रीमात्राधिकारमेव
७ ग शुक्लतृतीयायामेव
८ क उपवासनक्तादौ
९ ग एतान्येव
१० क माघ नास्ति

---

**2-8** देवीपुराण, ७९. १-३ पाठभेदः— गौरीम् इत्यतः नारायणीम् इत्यन्तं सर्वं पदं प्रथमाविभक्त्यन्तम् एकवचनं च, भद्रा दुर्गा, पूर्वोक्तं लभते फलम् (पूजयन्.......भवेत् स्थले), उमा (ताम्र स्थले), सर्वकाममवाप्नुयात्

षण्डजीरककुस्तुम्बद्रव्याणि विविधानि च।
दातव्यानि सुरश्रेष्ठ कन्यकानां तु भक्तितः ॥
सूर्यपात्रं तथा भाण्डं मृन्मयानि विशेषतः।
उद्दिश्य दापयेत् देव्यै प्रीयतां मे [1]सदा इति ॥
अनेन विधिना [2]कार्यं सौभाग्यं पुत्रसन्ततिः। 5
वर्द्धते नात्र सन्देहो नान्यथा मम भाषितम् ॥
[3]उपहारस्तु [4]देवीनां पूजोपकरणद्रव्याणि।

तेन देवीपूजानन्तरं दानम् उपस्करः कुन्दादिरेव। कुस्तुम्बो धान्यकम्, अत्र चोपवासे [5]राज्यफलम्। अग्रिमकर्माणि च सौभाग्यादीनीति व्यवस्थाश्रवणाच्च[6] बोद्धव्यम् इति कुन्दचतुर्थीव्रतम्[7]। 10

[8]मत्स्यपुराणे

वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षुकान्।
दद्याद् वस्त्राणि सूक्ष्माणि रसपात्रैर्युतानि च ॥
संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति।
एतद् गौरीव्रतं नाम भवानीलोकदायकम् ॥ 15

[9]इति गौरीव्रतम्। [10]रसपात्रैर्दध्यादिपात्रैः, मिथुनं दाम्पत्यम्।

---

१ क सदेतिह
२ ङ शक्र (कार्यं स्थले)
३ क उपहारो
४ ख देवानां
५ क ख राजफलम्
६ क च नास्ति
७ ग व्रतम् नास्ति
८ ङ मात्स्ये
९ क ख ङ इति गौरीव्रतम् नास्ति
१० क ग रस......दाम्पत्यम् नास्ति

---

12-15 मत्स्यपुराण, १०१. ७-८ पाठभेद :—घृतेक्षवम्, रसपात्रैश्च संयुतम्

कुर्वाणः एकभक्तमिति माघैकभक्तव्रतम् ।

वैशाखं यः [2]क्षिपेन् मासमेकभक्तेन मानवः ।
स याति श्रेष्ठतां लोके पूजितो धनवानपि ॥

महाभारते

कार्त्तिकं तु नरः सायं यः कुर्यादेकभोजनम् ।
5 शूरश्च [3]बहुभोगी च कीर्त्तिमांश्चैव[4] जायते ॥
[5]माघं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
श्रीमत्कुले जातिमांश्च स महत्त्वं प्रपद्यते ॥
निवसन्नेकभक्तेन वैशाखे यो जितेन्द्रियः ।
नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥

10 [6]तथा

यस्तु संवत्सरं पूर्णमेकाहारी भवेन्नरः ।
अतिरात्रस्य यज्ञस्य [7]फलं स समुपाश्नुते ॥
दशवर्षसहस्राणि स्वर्गलोके महीयते ।
तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते ॥

15 [8]मत्स्यपुराणे

संवत्सरं त्वेकभक्ताशी सभक्तजलकुम्भदः ।
शिवलोके वसेत् कल्पं प्रीतिव्रतमिदं स्मृतम् ॥

---

१ क ख ङ इति....व्रतं नास्ति
२ ङ क्षयेन्
३ घ बहुभागी
४ ख घ ङ प्रपद्यते (श्चैव जायते स्थले)
५ ख घ ङ माघं......प्रपद्यते नास्ति
६ घ तथा नास्ति
७ घ स फलं
८ घ ङ मात्स्ये
९ घ ङ °भुक्ताशी

---

16–17 मत्स्यपुराण, १०१. ५५ पाठभेदः—सभक्ष्यजलकुम्भदः, प्राप्ति° (प्रीति° स्थले)

[1]स्कन्दपुराणे

संवत्सरं तु यः पूर्णमेकभक्तेन तिष्ठति।
स पार्थिवसमो भूत्वा महीं याति नरेन्द्रवत्॥

[2]इति सम्पूर्णसंवत्सरैकभक्तव्रतम् ।

यः क्षिपेदेकभक्तेन यावज्जीवं नरोत्तमः । 5
विमानेनार्कवर्णेन स गच्छेच्छक्रलोकताम् ॥

[3]इति यावज्जीवव्रतम्।

तथा

अहोरात्रं तु यो देव्याः [4]कुर्यादिवं नरोत्तमः।
दशानां स सुवर्णानां फलं प्राप्नोति शोभनाम् ॥ 10

कुर्यादुपवसेदिति ; सुवर्णानां दन्तानाम्।

मासि मासि अहोरात्रं यः करोति नरोत्तमः।
स तेन कर्मणा युक्तो विद्वान् भवति धार्मिकः ॥

मासि मासि यावज्जीवं संवत्सराद्यनुपादानात्। अत्र च व्रतद्वये तिथ्यादिविशेषो नादरणीयः, प्रमाणाभावात्। 15

[5]मासे मासे तु यः कुर्यात् त्रिरात्रक्षपणं नरः।
[6]कौबेरं लोकमासाद्य विन्दते परमं पदम् ॥

तथा

अर्धमासं क्षिपेद् यस्तु नित्यमेवं[7] ह्यतीन्द्रियः।
देवराजेन तुल्योऽसौ भूत्वा [8]स्वर्गे च तिष्ठति ॥ 20

---

१ घ ङ स्कान्दे
२ क ख, घ ङ इति……व्रतम् नास्ति
३ क ख घ ङ इति……व्रतम् नास्ति
४ ख कुर्यादिव
५ ग मासि मासि
६ ङ कौबेर°
७ ग जितेन्द्रियः, घ ह्यतन्द्रियः
८ ख स्वर्ग

यस्तु मासं क्षिपेद् वीरो जितक्रोधो जितेन्द्रियः ।
विमानेन स दिव्येन अप्सरोभिः समन्वितः ॥
सर्वलोकेषु वसते बहुन्यब्दयुगानि तु ।
ततो ब्रह्मासनं प्राप्य ब्रह्मणा चानुमोदितः ।
5 सर्वलोके निवसते यथा देवो नरोत्तमः ॥

[1]मत्स्यपुराणे

पक्षोपवासी यो दद्याद् विप्राय कपिलाद्वयम् ।
ब्रह्मलोकमवाप्नोति देवासुरसुपूजितः ॥
कल्पान्ते राजराजः स्यात् प्रभाव्रतमिदं स्मृतम् ॥
10 मासोपवासी यो दद्याद् विप्रे धेनुं सुशोभनाम् ।
स वैष्णवपदं याति ब्रह्मव्रतमिदं स्मृतम् ॥

विष्णुपदप्रापकतया विष्णुरेव देवता मासोपवासव्रतस्य इत्याहुः ।[2]

यस्तु नीलोत्पलं हैमं शर्करापात्रसंयुतम् ।
एकान्तरितनक्ताशी समान्ते [3]वृषसंयुतम् ।
15 स वैष्णवपदं याति नीलव्रतमिदं स्मृतम् ॥

नीलोत्पलं [4]दद्यादिति शेषः । तत्रैव समान्त इति कालविधिः । एवं [5]चैतद् व्रतं सांवत्सरिकमर्थात् ।

---

१ ङ मात्स्ये
२ ग इत्याहुः अतः परम् इति यज्ञोपवासव्रते अधिकः पाठः
३ क वृषभप्रदः
४ ग स्यादिति (दद्यादिति स्थले)
५ ख च नास्ति

---

7-11 मत्स्यपुराण, १०१. ५४, ५१ पाठभेदः—सुपूजितम्, धेनुं विप्राय शोभनां, वैष्णवं भीमं (ब्रह्म° स्थले)
13-15 मत्स्यपुराण, १०१. ५ पाठभेदः—वैष्णवं, लीला (नील स्थले)

महाभारते

मासि मासि त्रिरात्रेण कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यं प्राप्नोति [1]निःसपत्नमना[2]विलम् ॥
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसा[3]नियतो नित्यं सत्यवान्नियतेन्द्रियः ॥ 5
वाजपेयस्य यज्ञस्य स [4]फलं प्राप्नुयान्नरः ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

चतुर्थे भक्तमश्नुते, [5]उपोष्य परदिने नक्तं भुक्त्वा इत्यर्थः ।

षष्टे काले तु कौन्तेय नरः संवत्सरं [6]तु यः ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ 10
चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।
चत्वारिंशत्सहस्राणि वर्षाणि दिवि मोदते ॥

षष्ठे काले अश्नातीति विशेषः ।

[7]तथा

मासोपवासी वर्षैस्तु दशभिः स्वयमुत्तमम् । 15
महर्षित्वम[8]थासाद्य सशरीरगतिर्भवेत् ॥
मुनिर्दान्तो जितक्रोधो जितशिश्नोदरस्तथा ।
जुह्वन्नग्नौ नियमतः सन्ध्योपासनसेवितः ॥
बहुभिर्नियमैरेवं मासं नाश्नाति यो नरः ।
अभ्रावकाशशीलश्च तस्य वासो न रुध्यते ॥ 20
दिवं गत्वा शरीरेण स्वेन राज्यं यथामरः ।

---

१ ङ निःसपत्यम्
२ क अवारितं
३ घ °निरतो
४ ग फलं प्राप्नोति व नरः
५ ङ उपोष्यापरदिने
६ क युतः (तु यः स्थले)
७ ग तथा इत्यारभ्य भवेत् पर्यन्तं नास्ति
८ घ ङ समासाद्य

स्वर्गे पुण्यं यथाकाममुपभुङ्क्ते यथाविधिः ।
[1]उपवासानिमान् कृत्वा गच्छेच्च परमां गतिम् ॥

तथा

उपवासैस्तथा तुल्यं तपः कर्म न विद्यते ।
5 उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ॥

तथा

मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।
[2]वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ।
10 त्रिरात्रं पञ्चरात्रं वा तयोः पुष्टिर्न विद्यते ॥
चतुर्थभुक्तक्षपणं [3]वैश्ये शूद्रे विधीयते ।
त्रिरात्रं न तु धर्मज्ञै विहितं ब्रह्मवादिभिः ॥

पुष्टिः फलम् ।

फलमूलाशिनां राज्यं स्वर्गः [4]पर्णाशिनां भवेत् ।
15 पयोभक्षाद्दिवं यान्ति स्नानेन द्रविणाधिकम् ।
गन्धाद्याः शाकदीक्षाभिः स्वर्गमार्गस्तृणाशिनाम् ॥

[5]स्नानेन अर्घतया, शाकदीक्षाभिः [6]शाकव्रतैः शाकाहारैरिति यावत् ।

द्विजः त्रिसवनस्नानात् पयः पीत्वा क्रतुं लभेत् ।
[7]नित्यस्नायी भवेद्दक्षः सन्ध्ये तु द्वे जपन् द्विजः ॥

---

१ क उपवासनियमान्
२ क वैश्यं शूद्रं
३ ग ङ वैश्यशूद्रे
४ क °स्तथाशिनां
५ घ स्नाने
६ ख शाकदीक्षाभिः अत्स्यानन्तरमधिकः पाठः स्वर्गमार्गस्तृणाशिनां
७ ग प्रातःस्नायी

[1]क्रतुं क्रतुफलम्। जपन् गायत्रीम्।

मन्त्रं साधयतो राज्यं नाकपृष्ठमनाशके।
स्थण्डिले तु शयानानां गृहाणि शयनानि च।
चीरवल्कलवासोभिर्वासांस्याभरणानि च॥

चीरवल्कलवासोभिर्धृतैरिति शेषः। 5

रसानां प्रतिसंहारैः सौभाग्यमिह विन्दति।

रसानां मधुघृत[2]तिलतैलगुडलवणगोक्षीराणाम्। मध्वादिषट्कं संकीर्त्य एतान् रसान् इति वराहपुराणा[3]भिधाना[4]त्। प्रति[5]संहारे परित्यागे।

आमिषप्रतिसंहारे प्रजा चायुष्मती भवेत्।

प्रजा[6]ः सन्ततिः। एवं चामिष[7]परित्यागः संकल्प[8]रूपत्वात्। देव- 10
पूजादि च यद्याचारबलान्नाङ्गमत्र माभूत् एवं सत्यवचनादपि च।

[9]तथा

मासि मास्यश्वमेधेन यो यजेत शतं समाः।
न खादति च यो मांसं सममेतद् युधिष्ठिर॥

तथा

निवृत्ता ये च मत्स्येभ्यः पृष्ठमांसेभ्य एव च। 15
निवृत्ताश्चैव दम्भेभ्यो दुर्गाण्यतितरन्ति ते॥

१ ख घ ङ क्रतुविशेषं
२ क ख °तिल° नास्ति
३ घ ङ °पुराणादौ (°पुराण° स्थले)
४ क °अवधानात् (°अभिधानात् स्थले)
५ ग प्रतिसंहारं
६ ग प्रजासंहार
७ क घ °त्यागः (°परित्यागः स्थले)
८ क संकल्पपूर्वक°
९ ख घ ङ तथा नास्ति

इदमेव तु केवलमत्स्यपरित्यागे[1] प्रमाणम्। केचित्तु [2]मासेभ्य इति [3]पठन्ति। तन्मते मत्स्यमात्रपरित्यागो मोहात्। 'मत्स्यादः सर्वमांसाद' इति निन्दायां विहित[4]रोहितपाठीनादिव्यतिरिक्ताभक्ष्यमत्स्य[5]मात्रोपसंहारात्। [6]पृष्ठमांसं पशोः, [7]ब्रह्मपुराणे पशुमांसपृष्ठनिषेधात्
5 दिनत्रयमांसत्यागोऽपि [8]स्वर्गाय।

मांसात्तु विरतो मर्त्यः स्वर्गं याति दिनत्रयम्।

इत्यभिधानात् दिनैकमांसपरित्यागोऽपि परमश्रेयसे।

यदाह

यश्च सम्यक् स्वधर्मस्थो गुरुशुश्रूषणे रतः।
10 गच्छेल्लोकं शुभं मर्त्यो दिव्यं देवनिषेवितम्।
[9]तमेव दिवसं मांसाद्विरतो लोकमाप्नुयात्॥

[10]तं लोकमित्यन्वयः।

[11]मत्स्यपुराणे

वर्जयित्वा पुमान् मांसमब्दान्ते गोप्रदो भवेत्।
15 तद्वद्धेममृगं दद्यात् सोऽश्वमेधफलं लभेत्॥
अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्।
कार्त्तिकमात्र[12]त्यागोऽपि [13]संवत्सरफलप्रदः॥

---

१ क ख ङ °त्यागे
२ क घ ङ मद्येभ्यः (मासेभ्यः स्थले)
३ ख घ ङ पठन्ति नास्ति
४ क ख ° रोहित नास्ति
५ ङ °मत्स्य नास्ति
६ घ ङ परित्यागोऽपि (पृष्ठ······त्यागोऽपि स्थले)
७ घ ङ ब्राह्मे
८ ग परमश्रेयसे
९ घ तदेव विरतं
१० घ तल्लोकम्
११ घ ङ मात्स्ये
१२ ख घ ङ °परित्यागे
१३ क संवत्सरप्रदः

---

14–16 मत्स्यपुराण, १०१. ३५

योनरः कार्त्तिकं मासं [1]मांसात्तु परिवर्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसस्य वर्जनात् ॥

इति वचनात् यत्र तत्रापि मासे मांसत्यागः पुण्यफलप्रदः ।

[2]यदाह

यो मासं वर्जयेत् मांसं पुरुषः शुभमानसः । 5
स याति स्वर्गमतुलं दिव्यभोगसमृद्धिमान् ॥

महाभारते

उदवासं वसेद् यस्तु स गणाधिपति र्भवेत् ।

उदवासं वसेत् उदकं वसेदित्यर्थः । इदं तु न यावज्जीवं किन्तु यावच्छक्यम् । एवं [3]स्थानव्रतेऽपि फलमूलाशनादिति [4]तु पूर्वोक्तम् । सत्यवचनादि- 10
वक्ष्यमाणं च ।

यावज्जीवं [5]नरश्रेष्ट दैवतैः सह मोदते ।
गन्ध[6]माल्यनिवृत्तस्तु कीर्त्तिर्भवति पुष्कला ।
केशश्मश्रुधारयतामग्र्या भवति सन्ततिः ॥

इति [7]महा[8]महोपाध्यायश्री[9]दत्तकृते [10]समयप्रदीपे [11]प्रथमपरिच्छेदः । 15

१ घ मांसं तु
२ ख घ ङ यदाह नास्ति
३ ग स्थानव्रतमपि
४ घ तु नास्ति
५ घ ङ यावज्जीवं इत्यनन्तरं सत्यवादी अधिकः पाठः
६ घ निवृत्त्या तु
७ क महामहोपाध्यायश्रीदत्तकृते नास्ति
८ ख श्रीमहामहोपाध्यायश्रीश्रीदत्तकृते
९ घ ङ श्रीमहामहोपाध्याय
१० ख श्रीसमयप्रदीपे
११ ङ प्रथमः परिच्छेदः

[1]चैत्रशुक्लप्रतिपत्कृत्यमुक्तं[2] ब्रह्मपुराणे

शुक्लायामथ पञ्चम्यां चैत्रे मासि शुभानना ।
श्रीब्रह्मलोकान् मानुष्यं संप्राप्ता केशवाज्ञया ॥
तस्मात्तां पूजयेत्तत्र [3]यस्तं लक्ष्मीर्न मुञ्चति ।
5 एषा श्रीपञ्चमी कार्या [4]विष्णुलोकगतिप्रिया ॥

चैत्रशुक्लकृष्णाष्टम्यां[5] पुनर्वसुयुक्तायाम् ।

त्वामशोक हराभीष्ट[6] मधुमाससमुद्भव[7] ।
पिबामि शोकसन्तप्तो[8] मामशोकं सदा कुरु ॥

इति मन्त्रेण कलिकाष्टकं शोकपरिहरकामः[9] पिबति लोकेऽपीयम-
10 शोकाष्टमी[10] प्रसिद्धा ।

शैवागमः ।

मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी ।
ख्याता दमनभञ्जीति सिद्धिदा सुमहोत्सवा ॥
तत्र ये मूलमन्त्रेण समूलदमनोच्चयं ।
15 निवेदयन्ति गौरीशे तेषां [11]चित्रार्पितं फलम् ॥

---

१ क ख ग घ ङ चैत्रशुक्ल नास्ति
२ ङ उक्ता
३ क ख स तं
४ घ विष्णुलोकगतिप्रदा
५ घ कृष्ण नास्ति
६ ङ °भीष्टं
७ °भवम्
८ ङ °सन्तप्तं
९ घ कामाः पिबन्ति
१० घ अष्टमीति प्रसिद्धा
११ चैत्रार्चितं

---

7–8 रघुनन्दन, कृत्यतत्त्व, पृ० ४६३—४६४

देवीपुराणे चैत्रशुक्लदमनं चाधिकृत्य

चतुर्दश्यां तु कर्पूरकुङ्कुमागुरुचन्दनैः।[1]
वस्त्रादिमाल्यपूजा च कर्त्तव्या महती शिवे॥
वितानध्वजछत्रं च देयं कार्यं तु जागरः।
महत् पुण्यमवाप्नोति [2]अश्वमेधशताधिकम्॥ 5

विष्णुः

[3]चैत्री चित्रायुता चेत् स्यात् तस्यां चित्र[4]वस्त्रप्रदानेन सौभाग्यमाप्नोति।

देवीपुराणे

चैत्र्यां चित्रर्क्षगां पूजां कृत्वा त्वाष्ट्रं पदं लभेत्। 10
पूजायां देव्याः अधिकारात्।

ब्रह्मपुराणे

मन्दे चार्के गुरौ वापि वारेष्वेतेषु [5]चैत्रकी।
तत्राश्वमेधिकं पुण्यं [6]स्नातश्चालभते नरः।
दानमक्षयतां याति पितॄणां चापि तर्पणम्॥ 15

मन्दे शनैश्चरे, [7]मन्वन्तरादित्यं चैत्र्यां वक्ष्यते।

विष्णुः

वैशाखशुक्लतृतीयायामुपोषिताक्षतैर्वासुदेवमभ्यर्च्य तान्येव हुत्वा [8]पापेभ्यः पूतो भवति।

---

१ घ ङ पूजाथि
२ घ चाश्वमेध°
३ घ चैत्रे चित्रायुता
४ घ वस्त्र नास्ति
५ घ चैत्रिकी
६ घ ङ स्नातश्च लभते
७ क मन्दरादित्यं (मन्वन्तरादित्यं स्थले)
८ ग अपायेभ्यः

---

2–5 देवीपुराण, ६१. २१ पाठभेदः—वस्त्रान्नमणिपूजा, जागरम्, महा°, अश्वमेध°
7–8 विष्णुसंहिता, ९०. ९ पाठभेदः—चेत् तस्याम्
18–19 विष्णुसंहिता, ९०. १७–१८ पाठभेदः स्वरूपः

यश्च तस्मिन्नहनि प्रयच्छति तदक्षयमाप्नोति, अभ्यर्च्य तृतीयायामित्यर्थः । होमो वासुदेवमुद्दिश्यैव ।

ब्रह्मपुराणे

वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः ।
5 यवान्युत्पादयामास युगं चारब्धवान् कृतम् ॥
ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत्[१] ।
तस्यां कार्यो [२]यवैर्होमो यवैर्विष्णुं समर्चयेत् ॥
यवान् दद्याद् द्विजातिभ्यः प्रयतः प्राशयेद् यवान् ।
पूजयेच्छंकरं गङ्गां कैलासं [३]च हिमाचलम् ॥
10 [४]भगीरथं च नृपतिं सागराणां सुखावहम् ।
स्नानं दानं तपः श्राद्धं जपहोमादिकं च यत् ॥
श्रद्धया क्रियते तत्र [५]तदानन्त्याय कल्पते ।
सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते ॥

अत्रापि [६]वासुदेवदेवताक एव होमः, उपक्रमे कीर्तनात् । [७]यवप्राशनं
15 तद्विकारद्वारा साक्षात् तृप्त्यनर्हत्वादित्याहुः, तन्न अदृष्टार्थत्वात् । सिन्धोः नद्याः ।

देवीपुराणे

तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूजयेत् ।
उदकुम्भप्रदानेन ब्रह्मलोके महीयते ॥

---

१ ग अवतारयेत्
२ ग यवैर्होमो नास्ति
३ क तुहिनाचलम्, ख तुहिनालयम्
४ ङ भागीरथीं
५ घ तदनन्ताय
६ ग वासुदेवात्मको होमः
७ क ख यच्च प्राशनं

---

1–2 विष्णुसंहिता, ९०.१८ स्वल्पस्तु पाठभेदः
7–10 रघुनन्दन, कृत्यतत्त्व, पृः ४२७ पाठभेदः—हिमालयम्, सगराणां
18–19 देवीपुराण, ५९. ३ख–४क

पूजयेद्देवीम् ।

अलवणतृतीयाप्रसङ्गेन [1]भविष्यपुराणे

इत्येषा तिथिरित्येवं तृतीया लोकपूजिता ।
सदा विशेषतः पुण्या वैशाखे मासि या भवेत् ॥

तथा 5

वारिदानं प्रशंसन्ति मोदकानां च भारत ।
वैशाखे मासि राजेन्द्र तृतीयां चन्दनस्य च ॥
वारिणा तुष्यते देवी मोदकैर्भव एव हि ।
[2]दानात्तु चन्दनस्येह कंजजो नात्र संशयः ॥ 10

[3]तृतीयामिति सप्तम्यर्थे तृतीयायामित्यर्थः । कंजजो ब्रह्मा ।

यात्वेषा [4]कुरुशार्दूल वैशाखे [5]मासे वै तिथिः ।
तृतीया साक्षया लोके गीर्वाणैरिह [6]कथ्यते ॥
योऽस्यां ददाति करकान् वारिधान्यसमन्वितान् ।
स याति पुरुषो [7]वीर लोकं वै हेममालिनः ॥ 15

करकान् कमण्डलून् वारिपूर्णान् उपरिनि[8]हितधान्यपू[9]रणभाजनंश्चेत्यर्थः, हेममालिनः सूर्यस्य ।

---

१ घ ङ भविष्ये
२ ख दानं तु
३ घ ङ तृतीयायामिति सप्तम्यर्थे द्वितीयातृतीयायामित्यर्थः
४ घ कुरुराजेन्द्र
५ ग मासि या (मासे वै स्थले)
६ घ ङ शंसते
७ ग नर
८ ग उपरिविहित°
९ क पूर (पूरण स्थले)

---

12–15 रघुनन्दन, कृत्यतत्त्व, पृः ४८८, स्वल्पस्तु पाठभेदः

ब्रह्मपुराणे

वैशाखे शुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्॥
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम्[१]।
5 वैशाख्यां पौर्णमास्यां तु सृष्टा कमलयोनिना॥
तिलाः कृष्णाश्च गौराश्च तृप्तये सर्वदेहिनाम्।
तस्मात् कार्यं तिलैः स्नानं तत्राग्नौ[२] जुहुयात्तिलान्॥
निवेदयेच्च विधिवत्तिलपात्रं[३] च विष्णवे।
तिलतैलेन दीपाश्च देया देवेभ्य एव च॥
10 सोदकैश्च तिलैः श्राद्धं कर्त्तव्यं पितृतर्पणम्।
तिलैः [४]समधुभिर्युक्तं ब्राह्मणेभ्यश्च भोजनम्॥
दातव्या दक्षिणा चापि तिलैर्मधुयुतैः सह।
[५]मन्त्रं जपेच्च पौराणां पारम्पर्यक्रमागतम्[६]॥
ये तिलाः सोमदैवत्याः सुरैः सृष्टाश्च गोसवे।
15 स्वर्गप्रदाः स्वतन्त्राश्च ते मां रक्षन्तु नित्यशः॥
दद्यादनेन मन्त्रेण तिलपात्राणि तत्र च।
सप्तभ्यस्त्वथ पञ्चभ्यो ब्राह्मणेभ्यस्तु कीर्त्तयेत्॥
प्रीयतां धर्मराजस्तु देवाश्चान्ये [७]तथापराः।
एवं कृते स मुक्तः स्यात् पापैर्जन्मशतार्जितैः[८]॥

20 प्रीयतां [९]धर्मराजेति कीर्त्तयेदिति सम्बन्धः। देवाश्चान्ये इति वासुदेवः प्रीयतामित्याद्याकारेण कीर्त्तयेदित्यर्थः।

---

१ घ °मेखलाम् अस्मात् परं अत्र फलं न श्रुतमित्यधिकः पाठः
२ घ तद्राग्नौ
३ घ °पात्रे च
४ ग साधुभिर्युक्तं
५ घ जपन् मन्त्रं
६ घ °क्रमागतम् अतः परं तद् यथा इत्यधिकः पाठः
७ क घ ङ तथापि वा
८ क ङ जन्मत्रयार्जितैः
९ घ धर्मराजश्चेति

विष्णुः

[1]वैशाख्यां पौर्णमास्यां तु ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्पयेत् धर्मराजानं पापेभ्यः पूतो [2]भवति ।

यमः

वैशाख्यां पौर्णमास्यां तु ब्राह्मणान् सप्त पञ्च वा । 5
क्षौद्रयुक्तैस्तिलैः कृष्णैश्चार्पयेद् यदि वेतरैः ॥
प्रीयतां धर्मराजेति यद् वा मनसि रोचते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

तिलैः सन्तर्पयेदिति[3] शेषः । यद् वा मनसि रोचते तद्वाचयेद् वेत्यर्थः ।

तथा 10

वैशाख्यामेव विधिवद् भोजयेद् ब्राह्मणान् दश ।
त्रिरात्रमुषितः स्नात्वा कृशरं प्रयतः शुचिः ॥
गौरान् वा यदि वा कृष्णान् तिलान् क्षौद्रेण संयुतान् ।
दत्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत्[4] ॥
यावज्जीवकृतं पापं तत्क्षणादेव [5]नश्यति । 15
[6]अब्दानामयुतं तिष्ठेत् स्वर्गलोके न संशयः ।
[7]मामेव च न पश्येत्तु न च पापेन लिप्यते ॥

---

१ घ पौर्णमास्यां तु वैशाख्यां ब्राह्मणान् पञ्च वा सप्त वा
२ ग भवति……रोचते (7) नास्ति
३ ङ इति नास्ति
४ घ ङ प्रीयतां धर्मराजेति पितॄन् देवांश्च तर्पयेदिति अधिकः पाठः
५ घ ङ मुञ्चति
६ क ख घ ङ अयुतायुतं च तिष्ठेत्
७ क मामेव तु

---

2-3 विष्णुसंहिता, ९०. १० पाठभेदः—वैशाखी विशाखायुता चेत् तस्यां (वैशाख्यां……तु स्थले) सन्तर्प्य धर्मराजानं प्रीणयित्वा

जावालः

शृतान्नमुदकुम्भं च [1]दद्याद् विप्राय भक्तितः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ॥
सुवर्णतिलयुक्तैश्च ब्राह्मणान् [2]सप्त पञ्च च ।
5 तर्पयेदुदपात्रैस्तु ब्रह्महत्यां [3]व्यपोहति ॥

निर्दिश्य निवेद्य ।

महाभारते

वैशाख्यां [4]पौर्णमास्यां च [5]तिलान् दद्याद् द्विजातिषु ।
तिला भक्षयितव्याश्च [6]स्वगात्रालम्भनं च तैः ।
10 कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ॥

देवीपुराणे

इन्द्राग्निदैवतैर्ऋक्षैः पौर्णमास्यां तथैव च ।
पूजां कृत्वा भवेद् ब्रह्मन् विगताघो नरोत्तमः ॥

इन्द्राग्निदैवतं विशाखा, पूजा देव्याः ।

15 [7]वराहपुराणे—वराह उवाच

ये यजन्ति वरारोहे माधवे मासि संश्रिताः ।
अहं तत् प्रतिगृह्णामि माधवे यज्ञयाजनम्[8][9] ॥

---

१ क ख घ ङ वैशाखे तु विशेषतः (दद्याद् विप्राय भक्तितः स्थले)
२ ग घ ङ सप्त पञ्च वा
३ घ व्यपोहतु
४ ङ पौर्णमास्यान्तु
५ ग विद्यां (तिलान् स्थले)
६ ख घ गात्राद्यालम्भनं
७ घ ङ वाराहे
८ ख ग घ च °याजिनम्
९ ख ग घ ङ यज्ञयाजनम् अतः परं अधिकः पाठः

मासे च माधवे यच्च फलं प्राप्नोति मानवः ।
दत्वा यो गोसहस्राणि यत् फलं च वसुन्धरे ॥
(ख ग द्वितीयपङ्क्तौ युग°, युगफलं च)

दत्वा निष्कसहस्राणि यत् फलं च वसुन्धरे ।
दद्यादेकां तु द्वादश्यां सोऽपि तत् फलमश्नुते ॥

संश्रिता नियमकृशाः, दत्वा [1]तु तत् फलमिति [2]शेषः । एकां गां द्वादश्यां कस्यांचित् अनुषङ्गे प्रमाणाभावात् ।

वामनपुराणे 5

दासीदासमलङ्कारमन्नं [3]यत्र सुसंयुतम् ।
पुरुषोत्तमतुष्ट्यर्थं प्रदेयं [4]सर्वकामिकम् ॥
यद् यदिष्टतमं किंचिद् यत्राप्यस्ति गृहे शुचि ।
तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः ॥

इदं दानं [5]ब्राह्मणसम्प्रदानकमेव विष्णुप्रीतिमुद्दिश्य । एवं च सर्वदाने 10 विणुप्रीतिः, यद् यदिति सामान्यवचनात् । [6]विष्णुप्रीतौ देवताधिकरणविरोध इति [7]चेन्न, स्वर्गवद[8]धिकारि[9]विशेषणत्वेन स्वत्वे प्रमाणाभावात् । अथवा तत्तत्फलपरमेव विष्णुप्रीतिपदम् । स्वर्गायुषी अपि सामान्यतः सर्वदानफलम् ।

नानाविधानि द्रव्याणि धनानि विविधानि च ।
आयुःकामेन देयानि स्वर्गमक्षयमिच्छता ॥ 15

---

१ ङ तु नास्ति
२ क विशेषः
३ घ ङ पात्र (यत्र स्थले)
४ ख घ ङ सर्वकामदम्
५ ख ग घ ङ ब्राह्मणसम्प्रदानमेव
६ क विष्णुपुराणे (विष्णुप्रीतौ स्थले)
७ क ङ केचित् न (चेन्न स्थले)
८ ङ अधिकार°
९ क विशेषणसत्वे

---

**6–9** **वामनपुराण, ६८. ३५–३६ पाठभेदः–षड्रससंयुतम् (यत्र सुसंयुतम् स्थले), सार्वकामिकम्, यद्वाप्यस्ति शुचि गृहे, °देवाय चक्रिणे**

6–**18** **रघुनन्दन, मलमासतत्त्व, पृः ८३९, स्वल्पः पाठभेदः**

इति संवर्त्तवचनात्।

द्रव्याणि भक्ष्यभोज्यादीनि, [१]धनानि हिरण्यादीनि, तत्तद्वाक्यात्तु तत्तद्विशेषफलान्यपि बोद्धव्यानीत्यलमिति [२]प्रासङ्गिकविस्तरेण। अत्र च मेषस्थादित्ये निम्बपत्रद्वयोपेतं मसूरमेकं सर्पाभयमिच्छन्तः पिबन्ति इति समाचारः।

5 ब्रह्मपुराणे

ज्यैष्ठे शुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती ।
तस्मात् सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये ॥
[३]उपहारैश्च विविधैर्गीतनृत्योत्सवादिभिः।
होमैः [४]पयोभिर्वस्त्रैश्च [५]कुन्दपुष्पैः सुगन्धिभिः ॥

15 गौड़ीयाः

ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं च दानं च महापातकनाशनम् ॥
यां कांचित् सरितं प्राप्य दद्याद् दर्भतिलोदकम् ।
मुच्यते दशभिः पापैः महापातकसम्मितैः ॥

15 दशभि[६]र्मानसवाचिककायिकैः मन्वाद्युक्तैः। अत्र गङ्गायामधिकफलम् । हस्तयोगेन [७]मङ्गलवारयोगेन चेति स्मरन्ति। सैषा दशहरा तात फलकामोऽधिकारीत्युक्ता मीमांसकैरनुमता।

ब्रह्मपुराणे

शास्त्रेषु वेदाः [८]सम्भूताः पुरा ज्यैष्ठां [९]यतो भुवि ।
तस्मात् तान् पूजयेत् तत्र वित्तशक्त्या प्रयत्नतः ॥

---

१ ग धान्यानि (धनानि स्थले)
२ ग प्रसङ्गविस्तरेण
३ क उपहारश्च विविधैर्गीतनृत्योत्सवादितैः
४ ख घ ङ जपादि° (पयोभिः स्थले)
५ घ कुन्दैः पूजा विधानतः, ङ कुन्दैः पुष्पैः
६ ङ मनसा वाचा
७ ङ भौमयोगेन (मङ्गलवारयोगेन स्थले)
८ क सम्पूताः
९ ग यदा

नवैर्यवान्नैः पितृभिः सह देवैः प्रपूज्य च ।
ततोऽनुलिप्तः स्रग्वी च नववस्त्रोपशोभितः[1] ॥
ब्राह्मणान् [2]पूजयेदादौ कृतस्वस्त्ययनान् शुचीन् ।
[3]अद्वेषरागैः संयुक्तः प्राङ्मुखः प्राशयेद् यवान् ॥

पितृभिः सह देवैरित्युक्ते पितृदेवानामपि पूजा । 5

आदित्यपुराणे

ज्यैष्ठे मासि तिलान् दद्यात् पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यत् पुण्यं तत् प्राप्नोति न संशयः ॥

विष्णुः

ज्यैष्ठी ज्येष्ठायुता चेत् स्यात् तस्यां छत्रोपानद्दानेन गणाधिपत्यं 10 [4]प्राप्नोति, मन्वन्तरादिश्च ज्यैष्ठीति वक्ष्यते । वृषस्थे रवौ सर्पाभयकामाः शिरीषबीजमेकमश्नन्ति ।[5]

ब्रह्मपुराणे

कृष्णाष्टम्यां तथाषाढ़े गाणापत्ये विनायकः ।
कृतपूज्यश्च तत्रैव सगणो [6]मोदकोत्करैः ॥ 15
भक्ष्यैर्गन्धैस्तथा माल्यैः कुल्माषेण च भूरिणा ।
गीतवाद्यैः [7]समधुरैस्तथा ब्राह्मणतर्पणैः ।
कृष्णाष्टमीषु सर्वासु विघ्नेशं पूजयेच्च तम् ॥

---

१ ख °शोभितैः
२ क पूजयित्वादौ
३ ख अद्वेषवाग्भिर्मुक्तैश्च
४ ख ग अवाप्नोति
५ ङ अश्नन्ति इत्यतः परं इति समाचारः अधिकः पाठः
६ ग मोदकोत्तमैः
७ ङ सुमधुरैः

---

10-11 विष्णुसंहिता, ९०. ११ पाठभेदः—°प्रदानेन गवाधिपत्यं

[1]उत्करैः समूहैः । कुल्माषः ईषत्स्विन्नमाषः, [2]यवपिण्डः इत्येके ।

आषाढ़े शुक्लसप्तम्यां विवस्वान् नाम भास्करः ।
जातः पूर्वासु तस्मात्तं तत्रोपोष्य जपेत् सदा ॥
[3]रथचक्राकृतौ रम्ये मण्डले सर्वकामदम् ।
5 भक्ष्यैर्भोज्यैस्तथा दीपैः पुष्पैर्धूपविलेपनैः ॥

पूर्वासु पूर्वफाल्गुनीषु । सदेति पदान्नित्याधिकारः । अत्राषाढ़कृष्ण-पक्षानन्तरं [4]शुक्लकथनात् कृष्णादिरेव मासो ग्राह्यः। एवमन्यत्रापि तिथिकृत्ये कृष्णादिरेव मासो ब्रह्मपुराणोक्तः ।

एकादश्यां तु शुक्लायामाषाढ़े भगवान् हरिः ।
10 भुजङ्गशयने शेते [5]परक्षीरार्णवे सदा ॥
तदा तत्प्रतिमा कार्या सर्वलक्षणसंयुता ।
सुप्तासु शेषपर्यङ्के शैलमृद्भिः सुदारुभिः ॥
ताम्रारकूटरजतैस्तथाचित्रपटेषु [6]वा ।
लक्ष्म्या उत्सङ्गहस्तेषु विन्यस्तचरणाम्बुजा [7] ॥
15 नानाविधोपकरणैः पूज्या च विधिपूर्वकम् ।
उपवासस्तु कर्त्तव्यो रात्रिजागरणं तथा ॥
तस्यां रात्र्यां व्यतीतायां द्वादश्यां पूजयेत्तदा ।
त्रयोदश्यां ततो नृत्यं गीतवाद्यं निवेदयेत् ॥
[8]विष्णुरङ्गोपजीविन्यो धनं दद्याच्च शक्तितः ।
20 चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिम् ॥

---

१ क उत्करः समूहः
२ क यवपिण्डकमित्यन्ये
३ ग स्थलं चक्रावृत्तौ
४ ग शुक्ल....एव नास्ति
५ ग ङ यदा (पर स्थले)
६ ग च
७ क °चरणाम्बुज
८ क विष्णवे रङ्गजीविन्यो

चित्रपटेषु वा कुड्यां [1]चित्रलिखिता पटलिखितेत्यर्थः ।

[2]वराहपुराणे—[3]भगवान् उवाच

अन्यद् व्रतं प्रवक्ष्यामि कर्मसंसारमोक्षणम् ।
कदम्बकुटजश्चैव वलिकोऽर्जुनकैस्तथा ॥
एभिरभ्यर्चनं कुर्याद्विधिदृष्टेन कर्मणा । 5
ततः संस्थापनं कृत्वा मम [4]तत्र व्रतं स्मृतम् ॥

मेघान्यपि मेघसङ्काशं क्षयागतं सिच्यमानं महीमिमां निद्रां च [5]भगवन् गृह्णन् लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दं [6]ज्ञात्वा पश्य देवनाथ मासानि चत्वारि तु पश्य नाथ ।

आषाढ़मासे द्वादश्यां सर्वशान्तिकरं शिवम् । 10
य एतेन विधानेन [7]भूमौ कर्म समाचरेत् ।
स पुमान् न [8]प्रणश्येत्तु संहारेषु युगे युगे ॥

वलिकः कपित्थः । संस्थानं [9]शिवपूजासमापनम् ।

यमः

क्षीराब्धौ शेषपर्यङ्के आषाढ्यां निविशेद्धरिम् । 15
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा ॥

---

१ क दिवि चित्रलिखिता
२ ङ वाराहे
३ ङ भगवान् उवाच नास्ति
४ क ङ मन्त्रविधिः स्मृतः (तत्र व्रतं स्मृतम् स्थले)
५ ङ भगवान्
६ ङ ज्ञात्वा तु परमेश्वर देवनाथ मासश्चत्वारि अन्यस्य तु पश्य नाथ
७ ग भूरि मे कर्म कारयेत्
८ क ङ प्रपद्यते
९ क ख शिव नास्ति

---

3–9 वराहपुराण, १२४. ४३-४५ बहवः पाठभेदाः
7–9 रघुनन्दन, तिथितत्त्व, पृः ११३, कृत्यतत्त्व, पृः ४३६ बहवः पाठभेदाः
10–12 वराहपुराण, १२४. ४६ बहवः पाठभेदाः

ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति ।
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मनः ।
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥

आषाढ़शुक्लैकादशीमारभ्य पौर्णमासीपर्यन्तं [1]विष्णो[2]र्निद्राग्रहण-
5 समयः। अत्र चैकादश्यां शयनमभिधाय तदादिदिनपञ्च[3]केन कर्मकथनं ब्रह्मपुराणे। वराहपुराणीय[4]द्वादशीकालमात्रेण निद्राग्रहणाभिधानम्। [5]यम-स्मृतौ पौर्णमास्यां शयनाभिधानम् आषाढ़ीपदस्यानुपाधेस्तत्रैव वृत्तेः।

एवं च ब्रह्मपुराणे यद्यप्येकादश्यां प्रबोधनमुक्तम्, तथापि तदादिदिनपञ्चकमेव [6]प्रबोधनसमयः। तथा हि एकादश्यादिदिनपञ्चकमुपक्रम्य

10 अभयं सर्वभूतेभ्यः पूर्वदत्तं सुरासुरैः ।
विष्णोः प्रबोधसमये दिव्यं युगशतं क्रमात् ॥

इत्यभिधानाद्दिनपञ्चकस्यैव [7]प्रबोधनसमयो ब्रह्मपुराणे [8]दर्शितः। तेन वराहपुराणे द्वादश्यां प्रबोधाभिधानं [9]समञ्जसम्। कल्पतरौ तु ब्रह्मपुराणबलादेकादश्यामेव शयनं प्रबोधश्च। यमस्मृतिस्थाषाढ़ीकार्त्तिकीपदं
15 चैकादशीपरम्, आषाढ़स्येयं कार्त्तिकस्येयमिति व्युत्पत्त्या। न च छप्रत्यया-पत्तिः। क्वचिदपवादविषयेऽप्युत्सर्गप्रवृत्तिरित्युक्तम्। भगवद्वाक्यमिदमिति पठन्ति।

मच्छयने मदुत्थाने मत्पार्श्वपरिवर्तने ।
शाकमूलफलाहारि हृदि शल्यं समर्पयेत् ॥

---

१ ग विष्णोः नास्ति
२ क निद्रा नास्ति
३ क ङ °पञ्चके
४ ख ङ °द्वादशीकालीनमन्त्रैः
५ क ख ङ यमः······शयनाभिधानम् नास्ति
६ क ङ प्रबोधसमयः
७ क प्रबोधसमयत्वम्, ङ प्रबोधसमयो
८ क दर्शितम्
९ ख ङ यमस्मृतौ च कार्त्तिक्यां प्रबोधनं समञ्जसम्

इति पार्श्वपरिवर्तनं भाद्रशुक्लैकादश्याम् । [१]तथा फलाहारपदमप्यन्न-गर्भम् । तेन सर्वथा न शयनपरत्वम् ।

भविष्यपुराणे

पौर्णमास्यामथाषाढ़े योऽर्चयेदम्बिकां नरः ।
सोपवासो महाभाग स याति परमां गतिम् ॥ 5

रामायणे भरतशपथेषु

आषाढ़ी कार्त्तिकी माघी तिथयः पुण्यसम्भवाः ।
अप्रदानवतो यान्तु यस्यार्योऽनुमते गतः ॥

विष्णुः

आषाढ़्याषाढ़युक्ता चेत् स्यात् तस्यामन्नप्रदानेन तदेवाक्षय्यमाप्नोति । 10

ब्रह्मपुराणे

आषाढ़ान्ते वैश्वदेवे नक्षत्रे सति शोभने ।
दश तान् पूजयेत् तत्र [२]विश्वेदेवान् महाबलान् ॥

आषाढ़ान्ते [3]आषाढ़पौर्ण्यमास्याम् । दश [४]विश्वे देवा यथा क्रतुदक्ष-वसुसत्यकालकामधुरिलोचनपुरुषमार्द्दवप्रभेदाः । [५]मन्वन्तरश्चाषाढ़ी वक्ष्यते 15 दद्यादित्युपक्रम्य देवीपुराणे

---

१ क तदा
२ ङ वैश्वदेवान्
३ ङ पौर्णमास्यान्ते
४ ख विश्वे देवा यथा नास्ति
५ ग मन्वन्तरादि

---

7–8 रामायण (पश्चिमोत्तरशाखा), अयोध्याकाण्ड, ८३. १७ पाठभेदाः—वैशाखी चैव पूर्णिमा (तिथयः पुण्यसम्भवाः स्थले), यातं (यान्तु स्थले)
10 विष्णुसंहिता, ९०. १२ पाठभेदः–आषाढ़्यामाषाढ़युक्तायाम् (आषाढ़्या°……° तस्याम् स्थले), °पानदानेन (प्रदानेन स्थले)

आषाढ़े तोयधेनुं च घृतं भाद्रपदे तथा मिथुनगते सूर्ये तण्डुलवारिणा शिरीषमूलपानं सर्पाभयकृद् गारुड़ोक्तम्।

अत्र च [१]तण्डुला व्रीहय आद्रियन्ते।

ब्रह्मपुराणे

5 यदा तु कर्कटं याति भगवांश्चण्डदीधितिः।
ततः प्रभृति कालः स्याद् दक्षिणायनसंज्ञकः॥
[२]अत्र प्रावृट्सु संपूज्या फलपुष्पाम्बुभिस्तथा।
गोरसाक्तांस्तथा शक्तून् ब्राह्मणेभ्यो निवेदयेत्॥
[३]हिमं च शर्करां चैव शाकमूलफलानि च।
10 उपानच्छत्रमाल्यानि जलधेनुं च शास्त्रवत्॥

हिमं कर्पूरम्।

गौड़स्मृतिः

सुप्ते जनार्दने कृष्णपञ्चम्यां भवनाङ्गने।
पूजयेन् मनसां देवीं स्नुहीविटपसंस्थिताम्॥

15 मनसां देवीं विषहरां, अत्र तिक्त[४]कटुकषाय[५]मधुराणां क्रमेण भक्षणमाचरन्ति।

भविष्यपुराणीयनागपञ्चमीव्रते तु

प्रथमं मधुरमश्नीयाद् द्वितीयं कामत[६]स्ततः।

---

१ ग तण्डूलव्रीहय
२ क ख तथा (अत्र स्थले)
३ ख ङ हिमं……शास्त्रवत् नास्ति
४ ख कटु नास्ति
५ ग °मधुरक्रमेण
६ ग इत्युक्तं (स्ततः स्थले)

---

1 देवीपुराण, १०२. १ क पाठभेदः—यो (च स्थले)

हस्तयुक्तश्रावणशुक्लपञ्चम्यां श्रवणयुक्तश्रावण्यां वा वाजसनेयिनामुपाकरणनामकं[1] कर्म

अध्यायानामुपाकर्म श्रावण्यां श्रावणेन वा ।
हस्ते नौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

इति याज्ञवल्क्यवचनात् । अत्र च [2]उभयत्रनक्षत्रयोगालाभे श्रावण्यामेवोपाकरणम्,[3] [4]केवलायामपि ऋष्यन्तरैर्विहितत्वात् । पञ्चमी तु हस्तयोगिन्येवादर्तव्या । अस्य चोपाकरणस्य स्वाध्यायाध्ययनं गत्वा विवादेऽपि स्वातन्त्र्येणानुष्ठाने आचार एव शरणम् ।

विष्णुः

श्रावण्यां श्रवणयुक्तायाम् । जलधेनुं सान्नां वासोयुगाच्छादितां दत्वा स्वर्गलोकमवाप्नोति ।

[5]श्राद्धं श्रावण्यां वक्ष्यते ।

ब्रह्मपुराणे

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे ।
अष्टाविंशति मे जातः कृष्णोऽसौ देवकीसुतः ॥
भारावतरणार्थाय क्षत्रियाणां क्षयाय च ।
तस्मात् स तत्र संपूज्यो यशोदा देवकी तथा ॥
गन्धैर्माल्यैस्तथा पिष्टैर्यवगोधूमसम्भवैः ।
स गोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैरपि ॥
रात्रौ प्रजागरः कार्यो नृत्यगीतसमाकुलः ।
अरुणोदयवेलायां नवम्यां च ततस्त्रियः ॥

१ ग नामकं नास्ति
२ ग उभयं
३ ग कर्म (उपाकरणम् स्थले)
४ क केवलायामेव
५ ख श्राद्धं नास्ति, ग श्राद्धं तु

3-4 याज्ञवल्क्यसंहिता, १. १४२ पाठभेदः—श्रवणेन
10-11 विष्णुसंहिता, ६०. १३ पाठभेदः—स्वर्गमाप्नोति

रक्तमाल्यावृताः सर्वाः पुष्पमाल्यैरलंकृताः ।
नयन्ति प्रतिमां ह्येषां [१]नानाविभवसम्भवाः ॥
नदीतीरं शुभं रम्यं विविक्तं वा महत् सरः ।
तत्र स्नानं प्रकुर्वन्ति स्नापयन्ति च तास्ततः ।[२]
15 युक्तमिक्षुविकारैश्च मध्वाज्यमरिचैः सह ॥

तत्र नद्यां स्नापयन्ति च ताः इत्यत्र ता नयन्ति प्रतिमां ह्येषामित्यनेन प्रकृताः [३]कृष्णयशोदादेवकीप्रतिमाः । भुञ्जते इत्यत्र ताः स्त्रिय इत्यर्थः । यद्यप्यत्र प्रतिमानयनादिकमङ्गं स्त्रीकर्त्तृकं तथापि प्रथमश्रुतप्रधानीभूतप्रजायां [४]विशेषाश्रुतेः सर्वाधिकारः । इदं च रोहिणीयोगम् अनपेक्ष्यैवाष्टमीमात्रं[५]कृत्य-
10 मुक्तम् । गौड़निबन्धे तु अर्धरात्रे रोहिण्यष्टम्योर्योगे सति रोहिण्यष्टमी नाम पुण्यतमः कालः । अत्र [६]चोपवासजागरविष्णुपूजादि शस्तम् । तिथिनक्षत्रयोश्चान्ते पारणमित्युक्तम् । भूपालादिनिबन्धेष्वपि रोहिण्यष्टम्यां शिवपूजोपवासादिकृत्यमुक्तम् । किन्तु न [७]भाद्रोल्लेखेन ।

तथा भविष्यपुराणे

15 [८]रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥
यद् बाल्ये यच्च कौमारे यौवने वार्द्धक्ये [९]च यत् ।
सप्तजन्मकृतं पापं स्वल्पं वा [१०]यदि वा बहु ॥

---

१ क नानाविभवसम्भवैः
२ ङ स्ततः अतः परं ततः प्रविश्य च गृहं यवान्नं भुञ्जते च ताः अधिकः पाठः
३ ङ कृष्ण नास्ति
४ ख ङ विशेषश्रुतेः
५ ख ङ कृत्यं नास्ति
६ ग च नास्ति
७ ग भाद्रपदोल्लेखेन
८ ख ङ रोहिणी तु
९ घ ङ तथा (च यत् स्थले)
१० ग बहु वा यदि

तत् क्षालयति भूतेशं तस्यामभ्यर्च्य [1]भक्तितः ।
होमजप्यादिदानानां फलं च शतसम्मितम् ॥
संप्राप्नोति न सन्देहो यच्चान्यन् मनसेप्सितम् ।
उपवासस्तु तत्रोक्तो महापातकनाशनः ॥

[2]भाद्रकृष्णे प्रायशः इयं रोहिण्यष्टमी भवति । अन्यत्रापि यदि लभ्यते तदापि पुण्यैव विशेषानभिधानात् । अत एव देवीपुराणे देव्याः क्रमपूजायां भाद्रकृत्यानन्तरमुक्तम् 5

अष्टम्यां रोहिणीयोगे [3]सोपवासस्तु पूजयेत् ।
विष्णुलोकमवाप्नोति सर्वकामसमृद्धिदम् [4]॥

[5]भाद्रकृष्णपक्षे केवलाष्टम्यां रोहिणीसहितायाम् अर्धरात्रिव्यापिन्यां जयन्तीनामिकायां वा नन्दनन्दनं कृष्णजन्मनिमित्तकमर्धरात्रे महानिशास्वेकभक्षणादिकं पिशाचधर्ममुपवासं वा भ्रममूलकमाचरन्तोऽशास्त्रज्ञाः पारिभाषिकवैष्णवाः शास्त्रार्थशिवपूजोपवासादिकृत्यमप्रमाणीकुर्वन्ति । [6]तदेवं भाद्रपदे[7] कृष्णपक्षे पुष्यनक्षत्रे छन्दोगानामुत्सर्गाख्यं कर्म । तत्र स्मरन्ति 10

छन्दोगा[8]मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियामिति[9] । 15

तदनन्तरं हस्तानक्षत्रे तेषामेव उपाकरणम् । तत्रापि पठन्ति—उपाकर्मापराह्णिक-

१ ख ङ शक्तितः
२ ग भाद्रपदकृष्णपक्षे
३ ख ङ सोपवासः प्रपूजयेत्
४ ङ °समृद्धिमत्
५ क ख ङ भाद्र°……कुर्वन्ति (13) नास्ति
६ क ख तदेवं नास्ति
७ क ख पदे नास्ति
८ क मिलित्वा
९ ख इति नास्ति

8-9 देवीपुराण, ५६. १४ख-१५क पाठभेदः—°ऋक्षे (°योगे स्थले)

मिति तदुभयमपि ग्रामाद् वहिः प्राच्यां [1]प्रतीच्यां वा दिशि नाभ्यूर्ध्वजले स्नात्वा [2]वेदविधिना कर्त्तव्यम् । अध्ययना[3]ङ्गमपीदमाचारात् स्वतन्त्रमपि ।

अत्र कर्मप्रदीपः

ऋषीणां सिच्यमानानामन्तरालं समाश्रिताः ।
5 [4]संपिबेत् यः शरीरेण [5]पर्षन्मुक्तजलच्छटाः ॥
विद्यादीन् ब्राह्मणः कामान् पुत्रादीन् नार्यपि ध्रुवम् ।
सुखान्यामुष्मिकान्यपि प्राप्नुयान् नात्र संशयः ॥

सिच्यमानानां तर्प्यमानानां, संपिबेत् प्रतीच्छेत्, [6]पर्षन्मुक्तजलच्छटाः [7]तर्पणकर्त्तृगणमुक्तजलबिन्दून्, ब्राह्मण इत्युपलक्षणं, य इत्यनेन [8]पूर्वं सर्वाधिकार-
10 प्रतिपादनात् । अत एव ऋषितर्पणानधिकारिणोऽप्यत्राधिकारः । एतच्च नार्य-पीत्यनेन सुतरां [9]व्याकृतम्, आमुष्मिकानि पारलौकिकानि ।

भविष्यपुराणे [10]तृतीयाकृत्ये

माघे भाद्रपदे [11]वापि स्त्रीणां पुण्यं[12] प्रचक्षते ।

तथा

15 गुडपूपास्तु दातव्या मासि भाद्रपदे तथा ।
तृतीयां पायसं वापि कामदेवस्य [13]प्रीतये ॥

---

१ क उदीच्यां
२ क ग वेदविधिना नास्ति
३ ग अङ्गम् नास्ति
४ क ग संपिबेयुः (संपिबेत् यः स्थले)
५ क ङ वर्षन्मुक्तजलच्छटाः
६ क ङ वर्षन्मुक्तजलच्छटाः
७ ख तर्पणगणकर्त्तृमुक्त°, ङ तर्पणगणकर्त्तृकमुक्त°, ग तर्पणकर्त्तृमुक्त°
८ क ग पूर्वं······त्यनेन (11) नास्ति
९ ग व्यक्तम्
१० ङ तृतीयां प्रकृत्य
११ ङ चापि
१२ ग प्रवक्षते
१३ ख तुष्टये

मन्वन्तरादिश्चेयं तृतीया, [1]भाद्रशुक्लचतुर्थ्यां [2]चन्द्रदर्शनेन मिथ्याभिशापभागी स्यादिति प्रवादसहितचन्द्रदर्शनसमाचारः ।

भविष्यपुराणे

[3]पुण्या भाद्रपदे मासि पञ्चमी नागपञ्चमी ।

क्षीरस्नानपूजादिभिर्नागप्रीतिहेतुत्वात् नागपञ्चमीति समाख्याता । 5
व्रतमत्र प्रागुक्तम् ।

तथा

येयं भाद्रपदे मासि षष्ठी स्याद् भरतर्षभ ।
इयं पुण्या पापहरा शिवा शान्ता शुभा तथा ।
स्नानदानादिकं किञ्चित् सर्वमक्षयमुच्यते ॥ 10

तस्यामिति शेषः ।

ब्रह्मपुराणे

इन्द्रो भाद्रपदे मासि शुक्लपक्षे तु विष्णुना ।
नियुक्तः सर्वशस्यानि व्रीहिंश्चैव फलानि च ॥
ओषधीर्वज्रहस्तश्च ताडयन् [4]पालयत्यपि । 15
तद् भयार्त्तानि सर्वाणि वर्धयन्त्यखिलं जगत् ॥
तस्मात् सततसंपूज्यः सभार्यश्च दिने दिने ।
सगणः सायुधश्चैव सानुयात्रः सवाहनः ॥
[5]पटभित्तिकृतो [6]देवो राजा पूज्यो विशेषतः ।

---

१ ङ चतुर्थ्यां
२ चन्द्रदर्शनसमाचारः (चन्द्रदर्शनेन······समाचारः स्थले)
३ क ग पुण्या
४ क पातयत्यपि
५ क पटे भित्तिकृते
६ ख राजा देवो

भक्ष्यैरन्नैः [1]फलैर्मूलैर्नवैर्वस्त्रैः सुशोभनैः ।
तमुद्दिश्यार्चयेद् विप्रान् तथा रङ्गोपजीविनः ॥

सानुयात्रः सानुचरः, पटभित्तिकृतः पटे भित्तौ वा लिखितः । लोकस्तु इक्षुदण्डादिनिर्मितं शचीजयन्तसहितम् इन्द्रमर्चयन्ति । दिने दिने इत्यभिधानात्
5 शुक्लपक्षे प्रत्यहं पूजा । [2]अत्र च

[3]द्वादश्यां भाद्रमासस्य शुक्ले पक्षे विशेषतः ।
शक्रमुत्थापयेद् राजा विश्वश्रवणवासरैः ॥
द्वादशीं संपरित्यज्य तिथावन्यत्र कुत्रचित् ।
शक्रः संस्थापितो हन्ति राजानं राष्ट्रमेव च ॥

10 इत्यादिज्योतिःशास्त्रात् द्वादश्यां दिनसप्तकादरो महाजनानाम् । दिने दिने इति वीप्साप्येतदभिप्राये इत्यविरोधः । गौडग्रन्थे श्रवणाद्यपादे शक्रोत्थानं भरण्यां [4]शयनमित्युक्तम् ।

विष्णुः

प्रोष्ठपद्यां तद्युक्तायां गोदानेन सर्वपापविनिर्मुक्तो भवति ।
15 [5]तद्युक्तायां भाद्रपदानक्षत्रयुक्तायाम् ।

मत्स्यपुराणे—नारद उवाच

कथमर्घप्रदानादि कर्त्तव्यं तस्य वै प्रभो ।
विधानं यदगस्त्यस्य पूजने तद् वदस्व मे ॥

---

१ ख फलमूलै°
२ क ख ङ अत्र च नास्ति
३ क ख ङ द्वादश्यां ····इत्यविरोधः (11) नास्ति
४ ग शक्रपूजनमित्युक्तम्
५ ग तद्युतायाम्

---

14 विष्णुसंहिता, ६०. १५ पाठभेदः-प्रोष्ठपद्युक्तायां (तद्युक्तायां स्थले)
17–7 (पृ० १६६) मत्स्यपुराण, ६१.४३–५०, ५३ग–५५क, ५६क पाठभेदः– अर्घप्रदानन्तु, विभो,

ईश्वर उवाच

कुर्यात् प्रत्यूषसमये विद्वान् तस्योदये निशि ।
[1]स्नानं शुक्लतिलैः सम्यक् शुक्लमाल्याम्बरो गृही ॥
स्थापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम् ।
पञ्चरत्नसमायुक्तं घृतपात्रेण संयुतम् । 5
नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितम् ॥
अङ्गुष्ठमात्रपुरुषं तथैव
सौवर्णमत्यायतवाहुदण्डम् ।
चतुर्भुजं कुम्भमुखे निधाय
धान्यानि सप्ताम्बरसंयुतानि ॥ 10
सकांस्यपात्राक्षतशुक्तियुक्तं
मन्त्रेण दद्याद् द्विजपुङ्गवाय ।
उत्क्षिप्य लम्बोदरदीर्घवाहु-
मनन्यचेता यमदिङ्मुखस्थः ॥
श्वेतां च दद्याद् यदि शक्तिरस्ति 15
रौप्यैः खुरैर्हेममुखीं [2]सवत्साम् ।
धेनुं नरः क्षीरवतीं प्रणम्य
सुवर्णघण्टाभरणं द्विजाय ॥
आसप्तरात्रादुदयेऽर्घमस्य
दातव्यमेतत् सकलं नरेण । 20
यावत् समाः सप्तदशाथवा स्यु-
रथोर्ध्वमप्येव वदन्ति केचित् ॥

---

१ क स्नातः
२ क सरूपाम् (सवत्साम् स्थले)

---

प्रत्यूषसमये विद्वान् कुर्यादस्योदये निशि, स्तद्वत् (सम्यक् स्थले), घृतपात्रसमन्वितम् (घृतपात्रेण संयुतम् स्थले), °मात्रं, चतुर्मुखं, यमदिङ्मुखः सन्, सवत्सघण्टां,आसप्तरात्रौदयमेतदस्य, °मप्यत्र (°मप्येव स्थले),

काशपुष्पप्रतीकाश वह्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥
प्रत्यब्दं च फलत्यागमेवं कुर्वन् न सीदति ।
होमं कृत्वा ततः पश्चाद् वर्जयेन् मानवः फलम् ॥
5 अनेन विधिना यस्तु पुमानर्घ्यं निवेदयेत् ।
इन्द्रलोकमवाप्नोति रूपारोग्यसमन्वितः ।
सप्तैव लोकानाप्नोति [1]सप्तधान्यं प्रयच्छति ॥

पञ्चरत्नानि

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम्[2] ।
10 एतानि पञ्चरत्नानि सर्वत्र कवयो विदुः ॥

इति कालिकापुराणोक्तानि ।

कुलिशं हीरकं, नीलम् इन्द्रनीलम् । कनकरजतमुक्ताप्रवालराजपट्टकरूपाणि पञ्चरत्नानि इति गौडाः । सप्तधान्यानि कथ्यन्ते ।

[3]यवा गोधूमचीनकास्तिलाः प्रियङ्गवः [4]श्वेताः श्यामाकाः सप्तमा
15 इति स्मृतिदर्शितानि ।

प्रियङ्गुः कङ्गुः, चीनकस्थाने देवधान्यान्तर्भावेन सप्तधान्यमिति पक्षान्तरम् । देवधान्यं [5]जगमल इति प्रसिद्धम् । यमदिङ्मुखस्थ इति सर्वत्र सम्बन्धः प्रयोगाङ्गकर्तृधर्मत्वात् ।

---

१ क सप्तार्घान् यः प्रयच्छति
२ ङ मौक्तिकम् इत्यतः परं निवेदयेत् कञ्च अधिकः पाठः
३ ख यवं
४ क श्वेताः नास्ति
५ ङ जममल

---

तु (च स्थले), इमं लोकं स चाप्नोति, सप्तार्घान् यः प्रयच्छति
1–2 रघुनन्दन, मलमासतत्त्व, पृ : ७४३ पाठभेदः—अग्नि°

अतो [1]दक्षिणाभिमुखेन सर्वं कर्त्तव्यम्। [2]हेममुखीं सुवर्णशृङ्गीम् अन्यत्र [3]तथा दर्शनात्। आसप्तरात्रादित्यादेरर्थः यस्मिन्नंशकेऽगस्त्योदयः तस्मात् परभूतो यः [4]सप्तमांशकः ततः प्रागर्घो दातव्य इति। अगस्त्योदय-कालस्तु ब्रह्मपुराणोक्तः।

कन्यांशेभ्यः पश्चिमेभ्यः षड्भ्यः प्रारब्धसंख्यया। 5
अंशान् द्वाविंशतिं यावद् भुङ्क्ते सूर्यस्तु राशिषु।
उदेति तावद् भगवानगस्त्यो व्योम्नि तोयभुक्॥

कन्यांशेभ्यः इति पूर्ववद् दिक्छब्दाध्याहारेण पञ्चमी। पश्चिमेभ्य इति च व्यधिकरणम्। तेनायमर्थः।

कन्यांश[5]पूर्वभूतेभ्यः सिंहांशकेभ्योऽन्तिमेभ्यः षड्भ्यः [6]प्रारभ्य अगस्त्यो-दय [7]इति बोद्धव्यं वा। पूर्वस्य पश्चिमत्तम्, अतएवानुष्ठानपक्षे पूर्वभूताया अपि कृतेः पश्चात् स्थानमित्युक्त एवार्थः। 10

अतएवागमः।

कन्यामनागते सुर्येऽर्घो वै सप्तमाद्दिनादिति सिंहान्तिकषडंशेष्वर्घं दर्शयति। ज्योतिःशास्त्रात्तु [8]सप्तविंशे सिंहांशकेऽयमगस्त्योदयस्तदनुसारात् कन्यां शकेष्वर्घदानं, आसप्त- रात्रादिति श्रवणात्। [10]आगमे तु 'कन्यायां समनुप्राप्ते सुर्येऽर्घः [11]सन्निवर्त्तत' इति कन्यांशकेष्वर्घो निषिद्धः। क्वचिदागमे ज्योतिःशास्त्रसंवादे च कालः। 15

---

१ ग दक्षिणमुखेन
२ ग सुवर्णमुखीं
३ क तथा नास्ति
४ ङ सप्तमोऽंशकः
५ क °पूर्वेभ्यः
६ ङ प्रारभ्य नास्ति
७ क इति नास्ति
८ ग अर्घ·······शास्त्रात्तु नास्ति
९ ग सप्तविंशे ······ ···कन्यांशकेषु नास्ति
१० ग आगमे च
११ ग सम्प्रवर्त्तते

अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः।
अर्घं दद्युरगस्त्याय ये च सन्ति महोदयाः॥ इति ।

[1]तथा जानुभ्यामवनीं गत्वा शिरस्थितताम्र[2]पात्रेण क्षणमगस्त्य ध्यात्वार्घो देयः। तथा प्रत्यब्दफलत्यागे विशेषः।

5 बीजपूरं नालिकेरं रम्भा जातीफलं तथा।
खर्जूरचूत[3]दाड़िम्बाः फलान्येतानि वर्जयेत्॥ इति ।

ब्राह्मणपक्षेऽगस्त्यसम्मानमिति मन्त्रेणार्घदानमित्यागमिकविशेषो न ग्राह्यः, काशपुष्पप्रतीकाशेत्यादिमन्त्रस्याविशेषाच्चातुर्वर्ण्यगोचरत्वात्। [4]सुवर्णपुरुष-दानेऽप्ययमेव विधिः, मन्त्रान्तरानभिधानात्। [5]गौड़ास्तु आवाहनादौ
10 सर्वत्र मन्त्रान् पठन्ति ।

मत्स्यपुराणे तु

अर्घे सौवर्णपुरुषदाने च मन्त्रो नान्यत्रे[6]ति । गन्धादिकं तु ओंकारादि-नमोऽन्तेनागस्त्यपदेन दातव्यं सामान्यविधिप्राप्तत्वात्। [7]अर्घद्रव्येऽपि

रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः।
15 सामान्यः सर्वदेवानामर्घोऽयं परिकीर्त्तितः॥

इति सामान्यविधिरेव विशेषानभिधानात्। यदि तु सफलमिति पाठस्तदा फलेनार्घदानमाचारात्। जलचन्दनपुष्पदूर्वाक्षतसहितेन पूजायामपि। गन्धपुष्प-धूपदीपनैवेद्यरूपाः पञ्चोपचाराः सामान्यविधेः। न च पूजायां प्रमाणाभावः,

---

१ ग तथा नास्ति
२ पात्रार्घेण (पात्रेण स्थले)
३ ङ °दाड़िम्बः
४ ग सौवर्ण°
५ क गौड़ाः (गौड़ास्तु स्थले)
६ क ग इति नास्ति
७ क अर्घद्रव्योऽपि

विधानं यदगस्त्यस्य पूजने तद्वदस्व मे

इत्युपक्रमे कीर्त्तनात्। तत्र लोका यामचतुष्टये पूजां [1]रात्रिजागरं लोपामुद्रापूजां चाचरन्ति। एष चात्रानुष्ठानक्रमः, प्रथमं यथोक्तस्नानं ततः कुम्भस्थापनं यथोक्तं सौवर्णपुरुषस्थापनं च। [2]आगममते कुम्भलग्नचन्दनेन [3]अनुप्रशान्तं मृगचर्मवेष्टितं [4]जटामुकुटधरं [5]शोभितं कमण्डलुदर्भाक्षमालास्रग्धरमगस्त्यं सौवर्णं न्यसेदिति [6]विशेषः। 5

ततोऽगस्त्यपूजार्घदानं च [7]महाव्याहृतिभिराज्यहोमः स्वयमाचार्यद्वारा वा। ततः फलत्यागः सुवर्णपुरुषदानं संपत्तौ दानं च इत्यगस्त्यार्घदानविधिः।

ब्रह्मपुराणे

कृतोपवासः संपश्येदगस्त्यमुदितं मुनिम्। 10
सर्वकामप्रदं पुण्यं सर्वभाग्यविवर्धनम्॥
अर्चितव्यश्च भगवान् श्रद्धाभक्तिसमन्वितैः।
[8]पूर्णकुम्भैः सकुष्माण्डैर्यवैर्धान्यैर्घृतेन च॥
जातीपद्मोत्पलैः शुभ्रैश्चन्दनेन सितेन च।
गोभिर्घृतैस्तथा वस्त्रैः रत्नैः सागरसम्भवैः॥ 15
[10]उपानच्छत्रदण्डैस्तु पादुकाञ्जनवल्कलैः।
भूरिणा परमान्नेन फलैः पुष्पैश्च [11]शोभनैः॥

---

१ ङ रात्रिजागरणं
२ ख आगममते नास्ति
३ क अनुशान्तं
४ ङ जटामुकुटधरशोभितं
५ ग शोभनं
६ ग शेषः
७ क महाव्याहृतिराज्यहोमः
८ क पूर्णकुम्भः
९ क यव°
१० क उपानच्छत्रदण्डैश्च
११ ख ङ शोभितैः

अन्नप्रकारै[1]र्भक्ष्यैश्च होमैर्ब्राह्मणतर्पणैः ।
आशास्य च शुभं काममुद्दिश्य च मनोगतम् ॥
यद्यहं प्राप्नुयां कामं भगवन् मनसेप्सितम् ।
त्वत्प्रसादादविघ्नेन भूयस्त्वां पूजयाम्यहम् ॥
5 इत्युक्त्वा पूजयेत् पश्चाद्दैवज्ञांश्च तथा गुरून् ।
ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यतः ॥

अत्र च पश्येदित्यभिधानात् [2]मेघादिच्छिन्नेन [3]शास्त्रार्थासिद्धिरेव । [4]मत्स्यपुराणीयकल्पे तु [5]दर्शनस्यानङ्गत्वात् कालमात्रस्य मेघादिसत्वेऽपि सत्वात् अविकल एव तत्रापि शास्त्रार्थः । न च एक एव कल्पो द्वाभ्यां मिलित्वेति 10 चतुरस्रं, फलभेदात् [6]कारणभेदाच्च । पूर्वत्र हि अर्घदानमेव प्रधानं फलसम्बन्धात् । इह तु पूजैव प्रधानं तत्रैव मनोगत[7]फललाभश्रवणादर्घस्य चाकथनात् । न चैवं मत्स्यपुराणीयकल्पे उपवासो न स्यादिति वाच्यम्, आचारबलादेव तत्रोपवासाङ्गीकारात् इति अगस्त्यपूजाविधिः ।

देवीपुराणे

15 अत्रैव कारयेद्देवीं पितृरूपां महोदयाम् ।
[8]कन्यास्थे च रवौ वत्स पूजनीया यथाविधि ॥
भौजङ्गीतिथिमा[9]श्रित्य यावच्चन्द्रार्कसङ्गमम् ।

---

१ ग भक्ष्यै नास्ति
२ क मेघादिच्छन्न°
३ ङ शास्त्रार्थसिद्धिरेव
४ क ङ मात्स्यकल्पे
५ ङ दर्शनस्यानागतत्वात्
६ ख करणभेदाच्च
७ क °फललाभश्च, ख °फललाभश्रवणम्
८ ग कन्यासंस्थे
९ ग आसाद्य (आश्रित्य स्थले)

---

15–17 देवीपुराण, ५९. १५–१६ पाठभेदः--तत्रैव, भौजङ्गीं
17 रघुनन्दन, मलमासतत्त्व, पृ० ८००, तिथितत्त्व, पृ०—११८ पाठभेदः—भोजङ्गीं तिथिमासाद्य

तत्रापि महती पूजा कर्त्तव्या पितृदैवते ॥
ऋक्षे[1] पिण्डप्रदानं च जेष्ठपुत्री [2]विवर्जयेत् ।
आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।
चतुर्दश्यां भवेत् पूजा अमावास्यान्तु कामिकी ॥

पितृरूपतया देवीकीर्त्तनादियं पूजा श्राद्धरूपैव । [3]अत एव तत्रापीत्यादि- 5
वाक्यद्वयलिखनं[4] श्राद्धनिबन्धेषु । भौजङ्गी तिथिः पञ्चमी, [5]चन्द्रार्कसंगमः
अमावास्या, [6]पितृदैवतम् ऋक्षं मघा । पिण्डप्रदाननिषेधात्[7] ज्येष्ठपुत्रिपक्षे इत-
राङ्गयुक्तादेव श्राद्धादपूर्वसिद्धिः नित्यश्राद्धवत् । [8]अमावास्यां तु कामिकीति
श्रुतेरस्यां चतुर्दश्यामावश्यकं शस्त्रहतश्राद्धम् । काम्यं तु द्वादशस्वपि कृष्णचतु-
र्दशीषु स्मृत्यन्तरात् व्याधिव्यतिरेकमृतत्वं चात्र प्रयोजकम् । आहवादिकमुपलक्ष- 10
णम् । युवमृतानामप्यत्रैव श्राद्धं वाक्यान्तरात् । उपसर्गमृतानां तु न राजादि-
निबन्धलिखितम् । आत्मघातादिना पिण्डोदकानर्हाणामप्यत्र श्राद्धम् ऋष्यन्तरात् ।
स्त्रिया अपि प्रसवाभिघातमृताया[9]अत्रैव श्राद्धम् । यथा सपिण्डीकरणोत्तरं पृथक्-
श्राद्धनिषेधो विशेषविहितश्राद्धादन्यत्र, तथा स्त्रीश्राद्धपृथक्निषेधोऽपि बोद्धव्यः ।

श्राद्धे चास्मिन् एकोद्दिष्टविधानम् ऋष्यन्तरैरितरश्राद्धनिषेधात् 15
आचाराद् गौडस्मृतेर्वा ।

ब्रह्मपुराणे

अश्वयुक् कृष्णपक्षे तु [10]श्राद्धं कुर्याद्दिने दिने ।
त्रिभागहीनं पक्षं वा त्रिभागं त्वर्धमेव वा ॥

---

१ ङ पिण्डप्रदानं वा
२ ग विसर्जयेत्
३ ख अत एव नास्ति
४ ग °लिखितम् (°लिखनं स्थले)
५ ङ चन्द्रार्कसंगमम्
६ ख ग पितृदैवत्यम्
७ ख प्रदान नास्ति
८ ङ अमावास्यायाम्
९ ङ तत्रैव
१० ङ श्राद्धं देयं

---

**1—4** देवीपुराण, ४९. १७-१८ पाठभेदः—पिण्डप्रदानं तु, °पातिषु (°पातिनां स्थले), अमावस्यान्तु

**1-2** रघुनन्दन, मलमासतत्त्व, पृः ८००, तिथितत्त्व, पृः ११८ पाठभेदः— पिण्डप्रदानं तु

**18-19** रघुनन्दन, मलमासतत्त्व, पृः ८४३, तिथितत्त्व, पृः १६५

पक्षचतुष्टयेऽपि कन्यागतत्वमप्रयोजकम् । अत एव कन्यागतत्वाभावेऽपि [१]श्राद्धकरणसमाचारः । कन्यागतत्वं तु पृथगेव निमित्तम् । अस्मिन् चापरपक्षे-[२]ऽष्टम्यां शाकेन श्राद्धम् [३]अष्टकात्वात् । त्रयोदश्यां मधुघृतोपेतपायसेनावश्यं श्राद्धं कर्त्तव्यम् । तत्र पुत्रवतोऽप्यधिकारः । काम्ये [४]तु त्रयोदशीश्राद्धे
5 सपुत्रस्य नाधिकारः । युगादित्वं चास्याः त्रयोदश्याः । अपरपक्षे श्राद्धं देयमित्य-भिप्रायवन्तः पठन्ति 'न दत्वा शस्त्रघातिने' । तद् यदि सकलनिबन्धपरि[५]दृष्टं वचनमिदं प्रमाणमपि स्यात् तदा[६]मावास्यां श्राद्धे योजनीयमन्यथा विरोधा-दितीतरतिथिषु श्राद्धमविचिकित्सित मित्यपरपक्षसंक्षेपः । विस्तरस्तु श्राद्धकल्पेऽनुसन्धेयः । यस्य च [७]दैवादपरपक्षे श्राद्धं न सम्पन्नं तेन सुखरात्र्यां
10 कर्त्तव्यम् ।

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्नचेदन्नं पितॄणां तु महालया ॥ इति

अभिधानाद् यद्यप्येतद्विधिमूलिका कर्त्तव्यतामावास्यायामेव स्थिरा
15 तथापि पतितशस्त्रहतश्राद्धं कार्त्तिककृष्णचतुर्दश्यामेवाचरन्ति । अत्र केचित् शस्त्रहतानां श्राद्धकर्मणि चतुर्दशी [८]प्रशस्तेति विष्णुपुराण[९]प्रमाणमिच्छन्ति, तत्तु न [१०]मनोहरं, सदा कर्त्तव्यतापत्तेः । [११]तस्मात् पतितत्वेन चतुर्दश्यां करणे भ्रमः समाचारो वामूलमिति ।

---

१ ख श्राद्धकरणे समाचारः
२ ग अष्टम्यां नास्ति
३ क ख ङ अष्टकात्वात् नास्ति
४ ङ तु नास्ति
५ क परिदिष्टं, ख ङ परिशिष्टं
६ ङ अमावास्याश्राद्धे
७ ग दैववशात् (दैवात् स्थले)
८ ख ङ शस्तेति
९ ख प्रमाण नास्ति
१० ग सुचारु
११ ख अतः

---

11–12 रघुनन्दन, श्राद्धतत्त्व, पृः २५४ पाठभेदः— दत्तं वै (तु स्थले)

ब्रह्मपुराणे

अश्वयुच्छुक्लपक्षे तु स्वातियोगेऽतिशोभने ।
पूर्वमुच्चैःश्रवा नाम प्रथमं सूर्यमावहत् ॥
तस्मात् स्वाश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा ।
पूजनीयाश्च तुरगा नवमी यावदेव हि ॥ 5
शान्तिस्वस्त्ययने कार्ये [1]तदा तेषां दिने दिने ।
धान्यं भल्लातकं कुष्ठं वचां सिद्धार्थकं तथा ॥
पञ्चरत्नेन सूत्रेण कण्ठे तेषां [2]तु बन्धयेत् ।
वायव्यैर्वारुणैः सौरैः [3]शाक्तैर्मन्त्रैः सवैष्णवैः ॥
वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने । 10
तुरगा रक्षणीयाश्च पुरुषैः शस्त्रपाणिभिः ।
न च ताड्याः क्वचित्तत्र न च वाह्याः कथंचन ॥

देवीपुराणे

कन्यास्थे तु रवाविषे शुक्लाष्टम्यां प्रपूजयेत् ।
सोपवासो निशार्धे तु महाविभवविस्तरैः ॥ 15
पूजां समारभेद् देव्या नक्षत्रे वारुणेऽपि वा ।
पशुघाताश्च कर्त्तव्या गवलाजवधस्तथा ।
बलिक्षेपं सुरेशानां कृत्वा सर्वां निशां नयेत् ॥

इषे आश्विने, वारुणे शतभिषायाम्, पशुघातः गवलाजव्यतिरिक्ताः पशवः, गवलो महिषः, सुरेशानाम् इन्द्रादिलोकपालानाम् । [4]आश्विन-शुक्लाधिकारे ब्रह्मपुराणे

---

१ ङ तेषां तदा
२ ङ प्रबन्धयेत्
३ क शाक्रैः
४ ङ आश्विने

---

14–18 देवीपुराण, ५६. १९ ख–२१ पाठभेदः—सोपवासनिशार्धे, ब्रह्मर्क्षे वारुणेऽपि वा, पशुघातः प्रकर्त्तव्यो, बलिक्षेपस्तु रक्षाणां कार्यः सर्वारिशान्तये

तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह ॥
अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः ।
उपोषितैर्वस्त्रधूपमाल्यैर्गन्धानुलेपनैः ॥
5 दीपैरन्नैस्तथा भक्ष्यैः फलमूलैश्च धान्यकैः ।
आमिषैर्विविधैर्वापि होमैर्ब्राह्मणतर्पणैः ॥
[1]बिल्वपत्रैः श्रीफलैश्च चन्दनेन घृतेन च ।
पशुभिः पायसै र्हृद्यैः रात्रिजागरणेन च ॥
[2]दुर्गागृहे च शास्त्राणि पूजितव्यानि पण्डितैः ।
10 वाद्यभाण्डानि चिह्नानि कवचान्यायुधानि च ॥
रात्रौ च शिल्पिभिस्तानि स्वानि पूज्यानि सर्वदा ।
नवम्यां तु कृतस्नानैः सर्वैः पूज्यास्तु ब्राह्मणाः ॥
भुक्त्वा तु शान्तिः कर्त्तव्या योगे गोधूलिनामनि ।
यदुक्तं शालिहोत्रेषु ज्योतिःशास्त्रेषु यन् मतम् ॥
15 [3]अथर्ववेदे यत् प्रोक्तं तत्तदत्र समाचरेत् ।
क्षिप्त्वा स कुक्कुटं छागं कृत्रिमे दारुवेश्मनि ॥
श्रवणे चाथ सन्ध्यायां निर्द्दहेत्तद् गृहं ततः ।
निर्द्ह्यमानौ तौ तत्र निर्गच्छन्तौ विभावयेत् ॥
दिशं शान्तां प्रदग्धां [4]वा तत्फलं च प्रयच्छतः ।
द्रष्टव्याश्चात्तशस्त्राश्च राज्ञा नीराजने जनाः ॥

भविष्यपुराणे

मासि चाश्वयुजे वीर शुक्लपक्षे त्रिशूलिनीम् ।
नवम्यां पूजयेद् यस्तु तस्य पुण्यफलं शृणु ॥
[5]अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
तत् फलं लभते वीर दिवि देवगणैर्वृतः ॥

---

१ ख बिल्वपत्रैः नास्ति
२ ङ दुर्गागृहे तु
३ ख ङ अथर्ववेदेषु
४ ग च (वा स्थले)
५ ङ अश्वमेधैः .... .... वाजपेयैः

[1]तथा

घृताभिषेकं यः कुर्यादहोरात्रं नराधिप ।
लक्ष्म्याधारेण भाण्डेन भगवत्या विचक्षणः ॥
मासि चाश्वयुजे वीर नवम्यां श्रद्धयान्वितः ।
गीतनृत्यविनोदैश्च शङ्खवादित्रनिस्वनैः ॥ 5
कुर्याज्जागरणं चैव नानापुष्पोपशोभया ।
सर्वपापविनिर्मुक्तो दिव्यतेजोमयस्तथा ।
मोदते दुर्गया सार्ध्वं दुर्गालोके महीयते ॥

[2]तथा

नवम्यां श्रीसमायुक्ता देवैः सर्वैः सुपूजिताः । 10
जघान महिषं दुष्टमवध्यं देवतादिभिः ॥
[3]लब्धाभिषेकं [4]वरदा शुक्ले चाश्वयुजे तथा ।
तस्मात् [5]सा तत्र सम्पूज्या नवम्यां चण्डिका [6]बुधैः ॥
महत्त्वं हि यतः प्राप्ता [7]अत्र देवी सरस्वती ।
अतोऽर्थं महती प्रोक्ता नवमीयं सदा बुधैः ॥ 15
पूजयित्वा महादेवीं नवम्यामत्र चण्डिकाम् ।
महत्त्वं प्राप्तवान् वीरो ब्रह्माविष्णुस्तथा शिवः ॥
तस्मादियं महापुण्या नवमी पापनाशिनी ।
उपोष्या [8]तु प्रयत्नेन सततं सर्वपार्थिवैः ।
मूलोत्तरेण ऋक्षेण संयुक्ता विधिवन्नृप ॥ 20

---

१ ङ तथा नास्ति
२ ङ तथा नास्ति
३ क लक्ष्म्याभिषेकम्
४ ङ शुभदा
५ क तत्र सा
६ ङ गणैः
७ ङ राजते सा (अत्र देवी स्थले)
८ ख ङ सुप्रयत्नेन

विशेषतो [1]ध्यानजीव्यैर्बालवृद्धैः सयौवनैः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च सेवकैः ॥
तत्र दानानि देयानि सोपवासैर्नरैर्नृप ।
गोसुवर्णानि राजेन्द्र वस्त्राणि विविधानि च ॥
5 स्वमांसरुधिरैर्दत्तैर्देवी तुष्यति वै नृणाम् ।
महिषच्छागमेषाणां रुधिरेण तथा नृप ॥
समैकमेकं [2]वरदा तृप्ता भवति चण्डिका ।
रुधिरेण तु मेषस्य [3]तर्पिता विधिवत् ततः ॥
माहिषेण शतं वीर तृप्ता भवति चण्डिका ।
सहस्रं तृप्तिमायाति स्वदेहरुधिरेण तु ॥
10 तर्पिता विधिवद्दुर्गा भित्वा बाहुं च [4]जङ्घके ।
एवं [5]नानागणैः सर्वैः पूज्यते सर्वदस्युभिः ।
अङ्गवङ्गकलिङ्गैश्च किन्नरैर्विबुधैः शकैः ॥

[6]समैकः सम्वत्सरः । मन्वन्तरादिश्चेयं नवमी ।

ब्रह्मपुराणे

15 आश्वयुज्यां पौर्णमास्यां निकुम्भो वालुकार्णवात् ।
आयाति सेनया सार्ध्वं कृत्वा युद्धं तु दारुणम् ॥
तस्मात्तत्र नरैर्मार्ग्याः स्वगेहस्य [7]समीपगाः ।
शोधितव्याः प्रयत्नेन भूषितव्याश्च [8]मण्डनैः ॥
पुष्पार्घफलमूलान्नसर्षपप्रकरैस्तथा ।
20 वेश्मानि भूषितव्यानि [9]नानारत्नैर्विशेषतः ॥

---

१ ग ध्यानजप्यैः
२ ङ एवं वरदा
३ ङ सुतर्पिता
४ क जङ्घकं
५ ख ङ नानागुणैः
६ क समैव (समैकः स्थले)
७ ग समीरणम्
८ क मण्डलैः
९ क नानारङ्गैः

सुस्नातैरनुलिप्तैश्च नरैर्भाव्यं सबालकैः ।
दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः ।
[1]स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः ॥
पूज्याश्च [2]सफलैः पत्रैस्तथा द्वारोर्ध्वभि[3]त्तयः ।
द्वारोपान्ते प्रदीपश्च सम्पूज्यो हव्यवाहनः ॥ 5
यवाक्षतघृतोपेतैस्तण्डुलैश्च सुतर्पितः ।
संपूजितव्यः पूर्णेन्दुः पयसा [4]पायसेन वा ॥
रुद्रः सभार्यः स्कन्दश्च तथा नन्दीश्वरो मुनिः ।
गोमद्भिः सुरभी पूज्या छागवद्भिर्हुताशनः ॥
औरभ्रवद्भिर्वरुणो गजवद्भिर्विनायकः । 10
पूज्यः साश्वैश्च रेवन्तो यथा विभवविस्तरैः ॥
तत्र पूज्यो निकुम्भस्तु सामिषैस्तिलतण्डुलैः ।
सुगन्धिभिर्घृतोपेतैः कृशराद्यैश्च भूरिशः ॥
ब्राह्मणान् भोजयित्वा तु भोक्तव्यं [5]मांसवर्जितम् ।
[6]शङ्खवाद्यरवोपेतैर्नृत्यगीतैश्च सा निशा ॥ 15
वह्निपार्श्वगतैर्नेया दृष्टाः क्रीडाः पृथग्विधाः ।
ततः प्रभातसमये स्वनुलिप्तैः स्वलंकृतैः ॥
मङ्गलाचरणं कार्यं वह्निसंपूजनं तथा ।
भोक्तव्यं बान्धवैः सार्धं क्रीडितव्यं यथासुखम् ॥

[7]गौड़निबन्धे तु लक्ष्मीपूजे[8]न्द्रपूजा[9]क्षजागरणं चोक्तम् । 20

---

१ क स्त्रीवृद्धमूर्खबालैश्च
२ ङ सकलैः
३ ङ भित्तिभिः
४ क ङ पायसेन च
५ ख मासवर्जितम्
६ क ख मिश्र (वाद्य स्थले)
७ ग गौड़निबन्धेषु, ङ गौड़निबन्धे
८ ग इन्द्रपूजाक्ष° नास्ति
९ ख अक्षय° (अक्ष° स्थले)

विष्णुः

आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्ण भाजनं सुवर्णयुतं विप्राय दत्वा दीप्ताग्निर्भवति। तथा आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा [१]रूपभाग् भवति। तस्मिन्नेव मासि प्रत्यहं [२]गोरसै-
5 र्ब्राह्मणान् भोजयित्वा[३]रोग्यभाग् भवति।

ब्रह्मपुराणे

तुलाप्रत्यागते सूर्ये विषुवद्दिवसे तथा।
ब्राह्मणेभ्यः प्रदेयानि शस्यान्यभिनवानि वै॥

देवीपुराणे

10 तुलास्थे दीपदानेन पूजा कार्या महाफला।
[४]दीपवृक्षः प्रकर्त्तव्यो [५]दीपचक्रमथापरम्॥
दीपयात्रा प्रकर्त्तव्या चतुर्दश्यां कुहुष्वपि।
सिनीवाली यथा वत्स [६]तथा कार्यं महाफलम्।
सममेव प्रकर्त्तव्यं बलिपूजामहोत्सवम्॥

15 [७]भविष्ये शिवाधिकारे

यः कुर्यात् कार्त्तिके मासि शोभनां दीपमालिकाम्।
घृतेन च चतुर्दश्याममावास्यां विशेषतः।

---

१ क रूपवान्
२ ग रसैः नास्ति
३ क आरोग्यवान्, ख राज्यभाग्
४ ख ङ दीपवृक्षाः प्रकर्त्तव्या
५ क दीपचक्रमथापि वा
६ ङ यदा
७ ङ भविष्यपुराणे

---

2–5 विष्णुसंहिता, ९०. १५, २४, २५ पाठभेदः —तथा नास्ति, राज्यभाग्
10–14 देवीपुराण, ५९. २३-२५क पाठभेदः महात्मना, दीपवृक्षाः प्रकर्त्तव्या दीपचक्रास्तथापरा, कुहुषु च, सिनीवालीस्तथा, सर्वशेष, °होमोत्सवम्

यावद्दीपस्य संख्या वै घृतेनापूर्य [1]बोधिता ॥
तावद् युगसहस्राणि [2]शिवलोके महीयते ॥

ब्रह्मपुराणे

अमावास्यां हि देवास्तु कार्त्तिके मासि केशवात् ।
अभयं प्राप्य सुप्ताश्च सुखं क्षीरोदसानुषु ॥ 5
लक्ष्मीर्दैत्यभयान् मुक्ता सुखं सुप्ताम्बुजोदरे ।
चतुर्युगसहस्रान्ते ब्रह्मा सुप्तस्तु पङ्कजे ॥
अतोऽत्र विधिवत् कार्या मनुष्यैः सुखसुप्तिका ।
दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ॥
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ॥ 10
[3]दीपवृक्षश्च कर्त्तव्यः शक्त्या देवगृहेष्वपि ॥
चतुष्पथश्मशानेषु नदीपर्वतवेश्मसु ।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु [4]गृहेषु च ॥
[5]वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः ।
[6]दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् ॥ 15
ब्राह्मणान् भोजयित्वादौ [7]विभज्य च बुभुक्षितान् ।
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥
स्निग्धैर्मुग्धैर्विदग्धैश्च [8]बान्धवैर्नृभूतैः सह ।
शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम् ॥

---

१ ङ बोधिना
२ ङ स्वर्गलोके
३ क दीपवृक्षास्ततः कार्याः
४ क गुहासु
५ ग फलैः
६ क रत्नमाला°
७ ग भोजयित्वा (विभज्य च स्थले)
८ ङ बान्धवैश्च नृपैः

---

4–18 रघुनन्दन, तिथितत्त्व, पृ० १८६ बहवः पाठभेदाः
19–6 (पृ० १८०) रघुनन्दन, तिथितत्त्व, पृ० २७ बहवः पाठभेदाः

कार्त्तिके शुक्लपक्षे [1]तु प्रथमेऽहनि सत्यवत् ।
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती ॥
अतोऽर्थं शङ्करो दुःखी गौरी नित्यं सुखोचिता ।
तस्माद् द्यूतं प्रकर्त्तव्यं प्रभातसमये नरैः ॥
5　तस्मिन् द्यूते जयो यस्य तस्य [2]सम्वत्सरे जयः ।
पराजयो विरुद्धस्तु [3]लब्धनाशकरो भवेत् ॥
श्रोतव्यं गीतवाद्यादि [4]सुलिप्तैः समलङ्कृतैः ।
विशेषतश्च भोक्तव्यं प्रशस्तैर्बान्धवैः सह ॥
तस्यां निशायां कर्त्तव्यं शय्यास्थानं सुशोभनम् ।
10　गन्धैः पुष्पैस्तथा वस्त्रै रत्नैर्माल्यैरलंकृतम् ॥
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम् ।
दयिताभिश्च सहितै र्नेया [5]सा तु [6]शुभैर्निशा ।
नवैर्वस्त्रैः [7]सुसंपूज्या द्विजसम्बन्धिबान्धवाः[8] ॥

[9]पद्मपुराणे

15　कार्त्तिके मास्यमावास्या तस्यां दीपप्रदीपनम् ।
शालायां [10]ब्रह्मणः कुर्यात् स गच्छेत् [11]परमं पदम् ॥
प्रतिपदि ब्राह्मणांश्च गुड़मिश्रैः प्रदीपकैः ।
वासोभिरहतैः पूज्य गच्छेद् वै ब्रह्मणः पदम् ॥
गन्धैः पुष्पैर्नवैर्वस्त्रैरात्मानं पूजयेत् तु यः ।
20　तस्यां प्रतिपदायां तु स गच्छेत् ब्रह्मणः पदम् ॥

---

१ क च
२ क संवत्सरः जयः, ङ संवत्सरः शुभः
३ ग धननाशकरो
४ ग अनुलिप्तैरलंकृतैः
५ क सा भवने निशा
६ ङ शुभैर्निश
७ ख ङ सुसंपूज्य
८ ङ बान्धवैः
९ क ब्रह्मपुराणे
१० ङ ब्राह्मणः
११ क ग ब्रह्मणः

महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी।
ब्रह्मणः सुप्रिया नित्यं बाले या परिकीर्त्तिता॥
ब्राह्मणान् [1]भोजयेत् तस्यामात्मानं च विशेषतः।
स याति परमं स्थानं विष्णोरमिततेजसः॥

तथा 5

गोमहिष्यादिकं किंचित् [2]सर्वं तत् भूषयेन्नृप।
चेलवस्त्रादिभिः सर्वैस्तोरणाधस्ततो नयेत्।
ब्राह्मणानां तथा भोज्यं कुर्यात् कुरुकुलोद्भव॥

वामनपुराणे

स्नानं दानं शतगुणं कार्त्तिके या तिथि र्नृप। 10

बलिं प्रति त्रिविक्रम उवाच।

अथान्यद् वासरं पुण्यं वृत्ते शक्रमहोत्सवे।
वीरप्रतिपदानाम [3]तत्र भावी महोत्सवः॥
तत्र त्वां नरशार्दूल तुष्टाः पूता अलङ्कृताः।
अर्घदीपप्रदानेन अर्चयिष्यन्ति यत्नतः॥ 15
तवोत्सवो मुख्यतमो भविष्यति दिवानिशम्।
यथैव राज्ये भविता तथा भवतानुसाम्प्रतम्॥
तथैव सा भाव्येति कौमुदीति च।

---

१ क ङ पूजयेत्
२ क ग तत् सर्वं
३ क तव

---

12-17 वामनपुराण, ६५. ५८-६० बहवः पाठभेदाः

13 रघुनन्दन, तिथितत्त्व, पृ० २७ पाठभेदः—तव (तत्र स्थले)

गौड़ग्रन्थे

द्वितीयायां भगिनीहस्तेन यत्नतो भोजनं सुवर्णालङ्कारादिना भगिनीपूजा [१]चोक्ते[२]ति नास्मत्सम्मतं, समूलवचनानुपलम्भात्।

भविष्यपुराणे

5 मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य चण्डिकाम्।
तत् फलं लभते वीर [३]नवम्यां कार्त्तिकस्य च॥

युगादिश्चेयं नवमी।

ब्रह्मपुराणे

एकादश्यां तु शुक्लायां कार्त्तिके मासि केशवम्।
10 [४]प्रसुप्तं बोधयेद् रात्रौ [५]श्रद्धाभक्तिसमन्वितः॥
[६]नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुःसाममङ्गलैः।
वीणाप्रणवशब्दैश्च पुराणश्रवणेन च॥
वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः।
सुभाषितैरिन्द्रजालैर्भूमिशोभाभिरेव च॥
15 पुष्पैर्धूपैश्च नैवेद्यै र्दीपवृक्षैः सुशोभनैः।
होमै र्भक्ष्यैरपूपैश्च फलैः शाकैश्च पायसैः॥
इक्षोर्विकारैर्मधुना द्राक्षाक्षौद्रैश्च दाडिमैः।
कुवेरकस्य मञ्जर्यां मालत्यां लवणेन च॥
द्वाभ्यां च श्वेतरक्ताभ्यां चन्दनाभ्यां च सर्वदा।

---

१ ङ प्रोक्ता
२ क ख ङ इति............लम्भात् नास्ति
३ नवमी कार्त्तिकस्य तु
४ ङ सुप्तः प्रबोधयेद् रात्रौ
५ नानाविभवविस्तरैः
६ ग नृत्यैः............मङ्गलैः नास्ति, ख नत्य°

कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकुङ्कुमः ॥
तथा नानाविधैः [1]पुष्पैर्द्रव्यै[2]र्वीरक्रयार्जितैः ॥

कुवेरकं तुलसी वर्वरीति केचित् । वीरक्रयः [3]याच्ञाशून्यक्रयणम् । विष्णुपूजामहाफलत्वमत्र प्रागेव दर्शितम् ।

[4]वराहपुराणे 5

कौमुदस्य तु मासस्य या सिता द्वादशी भवेत् ।
अर्चयेद् यस्तु मां तत्र तस्य पुण्यफलं शृणु ॥
यावल्लोका हि वर्त्तन्ते यावत्त्वं चैव माधवे ।
मद्भक्तो जायते [5]तावदन्यभक्तो न जायते ॥
कृत्वा वै मम कर्माणि द्वादश्यां मत्परो नरः । 10
ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत् ॥
[6]ओं ब्रह्मेन्द्ररुद्रैरभिपूज्यमानो भवान् ऋषिर्वन्दितवन्दनीयः ।
प्राप्ता तवेयं किल कौमुदाख्या जागृष्व जागृष्व सुलोकनाथ ॥
मेघागतनिर्मलपूर्णचन्द्रः शारद्यपुष्पाणि मनोहराणि ।
अहं ददानीति च धर्महेतोर्जागृष्व जागृष्व सुलोकनाथ ॥ 15
उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
[7]त्वयि चोत्थीयमाने तु उत्थितं भुवनत्रयम् ॥
[8]एवं कर्माणि कुर्वन्ति द्वादश्यां ये मनस्विनि ।
मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम् ॥

---

१ ग पुण्यै (पुष्पै स्थले)
२ क ङ वीरक्रयाकृतैः
३ क याचञाशून्यं
४ ङ वाराहपुराणे
५ ख यो हि (तावत् स्थले)
६ ङ ओं नास्ति
७ ङ त्वया चोत्थीयमानेन
८ क परं

---

12–19 रघुनन्दन, एकादशीतत्त्व, पृः १०३ बहवः पाठभेदाः
12–17 रघुनन्दन, कृत्यतत्त्व, पृः ४५४, तिथितत्त्व, पृः ११३ बहवः पाठभेदाः

मन्वन्तरादिश्चेयं[1] द्वादशी ।

[2]भविष्यपुराणे

यद्वै बहु भवेत् पुण्यं विधिना पूजया खग ।
तत् कार्त्तिक्यां भवेत् पुण्यं समाराध्य दिवाकरम् ॥
5 पुण्यमेव च फाल्गुन्यामाषाढ्यामेवमेव च ।
चातुर्मास्यार्चनं ह्येतन् महापुण्यफलप्रदम् ॥

तथा

कार्त्तिक्यां पौर्णमास्यां तु सोपवासोऽर्चयेत्तु माम् ।
सोऽग्निष्टोमफलं विन्देत् सूर्यलोकं च गच्छति ॥

10 देवीपुराणे

कार्त्तिक्यां कारयेत् पूजां यागं देवीप्रियं सदा ।
ब्रह्मविष्णुशिवादीनां तत्र पूजा महाफला ॥
गवोत्सर्गः प्रकर्त्तव्यो नीलं [3]वा वृषमुत्सृजेत् ।
सर्वयज्ञफलं ब्रह्मन् प्राप्नुयादविचारयन् ॥

15 दानप्राशस्त्यमप्यत्र प्रागुक्तम् ।

विष्णुः

कार्त्तिकी कृत्तिकायुता[4] चेत् स्यात् तस्यां सितमुक्षाणम् एकवर्णं वा शशाङ्कोदये सर्वशस्यरत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दद्यात्, कान्तारभयं न पश्यति ।

---

१ क ख आदि नास्ति
२ ङ ब्रह्मपुराणे
३ ख वा नास्ति
४ ङ °युक्ता

---

11-14 देवीपुराण, ५६. २६ ख-२८ पाठभेदः--देवीप्रियां, गावोतसर्गं प्रकर्त्तव्यम्
17--19 विष्णुसंहिता ६०. १६ पाठभेदः—अन्यवर्णं, दत्वा (दद्यात् स्थले)

ब्रह्मपुराणे

आग्नेयं तु यदा ऋक्षं [1]कार्त्तिक्यां तु [2]भवेत् क्वचित्।
महती सा तिथिर्ज्ञेया [3]स्नानदानादिषूत्तमा॥

आग्नेयं कृत्तिका।

यदा याम्यं भवेद् ऋक्षं तस्यामेव तिथौ क्वचित्। 5
तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता॥

याम्यं भरणी।

प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप।
सा महाकार्त्तिकी [4]प्रोक्ता देवानामपि दुर्लभा॥

प्राजापत्यं रोहिणी। 10

तथा

पुण्या महाकार्त्तिकी स्याज्जीवेन्दोः कृत्तिकास्थयोः।

तथा

विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः।
स योगः पद्मको [5]नाम पुष्करेष्वतिदुर्लभः॥ 15

विष्णुः

मासः कार्त्तिकोऽग्निदवत्योऽग्निश्च सर्वदेवानां मुखं, तस्मात् कार्त्तिके मासि वहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी वत्सरकृतात् पापात्

१ क तस्यामेव तिथौ क्वचित्
२ ङ भवति क्वचित्
३ ख स्नानदानेषु चोत्तमा
४ ग प्राप्ता
५ क ज्ञेयः

पूतो भवति।

वहिर्ग्रामाद् गृहाच्च। अत्र स्नाने प्रातःकालो नाङ्गम्। प्रातः-स्नानं तत्र प्रागेव दर्शितम्।

[1]भविष्यपुराणे

5 दिने दिने [2]जपन्नाम भास्करस्य महीपते।
ददाति कार्त्तिके यस्तु सूर्यायतनदीपकम्॥
जातिस्मरत्वं प्रज्ञां च प्राकाश्यं सर्ववस्तुषु।
अव्याहतेन्द्रियत्वं च [3]स प्राप्नोति न संशयः॥

पाद्मे

10 रसधेनुं तदा दत्वा कार्त्तिके मासि पार्थिव।
सर्वान् कामानवाप्नोति नित्यं सुगतिभाग् भवेत्॥

महाभारते

कौमुदे शुक्लपक्षे तु योऽन्नदानं करोत्युत।
स सन्तरति दुःखानि प्रेत्य चानन्त्यमश्नुते॥

15 [4]तथा

कौमुदं तु विशेषेण [5]शुक्लपक्षं नराधिप।
वर्जयेत् सर्वमांसानि धर्मो ह्यत्र विधीयते॥

---

१ ख भविष्ये
२ ख श्रद्दधानो (जपन्नाम स्थले)
३ ङ संप्राप्नोति
४ ख तथा नास्ति
५ ङ शुक्लपक्षे

---

17 (पृ० १८५)–1 (पूतो भवति) विष्णुसंहिता ८९. १–३ पाठभेदः—तस्मात्तु कार्त्तिकं मासं, संवत्सरकृत्यात्

16–17 रघुनन्दन, तिथितत्त्व, पृ० १४६, मलमासतत्त्व, पृ० ८२३, कृत्यतत्त्व, पृः ४४९ पाठभेदः —शुक्लपक्षे

तथा नाभागाम्बरीषादीन् प्रस्तुत्य

एतैश्चान्यैश्च राजेन्द्रैः पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियावृताः ।
[1]उपास्यमाना गन्धर्वैः [2]स्त्रीसहस्रसमन्विताः ॥ 5

ब्रह्मपुराणे एकादश्यादिदिनपञ्चकं प्रकृत्य

देया च सर्वभूतेभ्यो नरैरभयदक्षिणा ।

अभयदक्षिणा [3]अहिंसा, अत एव मांसत्यागाचारोऽत्र [4]विशेषः, [5]मांसभक्षणस्य हिंसाप्रभेदत्वेनाभिधानात् । [6]गौड़निबन्धेषु तु वकैरप्यत्र मांसत्यागात् वकपञ्चकमिति समाख्यायां चातीवात्र मांसाशनं निन्दितम् । 10 समस्त[7]मासमांसत्यागफलं प्रागुक्तम् ।

विष्णुः

मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरोयुक्तायां चूर्णितलवणस्य सुवर्णनाभ-प्रस्थमेकं चन्द्रोदये ब्राह्मणाय [8]प्रतिपादयेत् । अनेन कर्मणा रूपसौभाग्यवान् अभिजायते । 15

---

१ ख ग ङ उपास्यमान°
२ क सहस्रस्त्रीसमन्वितः
३ ख ङ अहिंसा नास्ति
४ क ख विशेषतः
५ क मांसभक्षणस्यापि
६ क ख गौड़निबन्धे
७ ग मास नास्ति
८ क विसर्जयेत्

---

2–3 रघुनन्दन, मलमासतत्त्व, पृः ८२३ पाठभेदः—एतैरन्यैश्च
13–15 विष्णसंहिता, ९०. १-२ पाठभेदः—मृगशिरसा, सुवर्णनाभं, प्रदापयेत्

सुवर्णनाभं सुवर्णगर्भम्, प्रस्थं षोडशपलानि, [1]द्वादशप्रसृतिभिः सेतिका-चतुष्टयं प्रस्थमिति पक्षान्तरम् ।

[2]विष्णुः

श्रावण्यग्रहायण्योरष्टकासु च पितृभ्यो दद्यात् ।

अष्टकासाहचर्यात् श्रावण्यग्रहायण्योरप्यावश्यकत्वं श्राद्धस्य ।

5 [3]वराहपुराणे—[4]वराह उवाच

ये यजन्ति वरारोहे मासि मार्गशिरे [5]द्विजाः ।
तान् सर्वाननुगृह्णामि हव्यकव्यपथिस्थितान् ॥

ब्रह्मपुराणे

पौषे कृष्णाष्टकायां [6]तु शाकैः श्राद्धं सुशोभनम् ।

10 आद्यापूपैः सदा कार्येति [7]वचनान्तरात् शाकापूपयोर्विकल्पः[8] । अत्र छन्दोगवाजसनेययोः स्वगृह्यानुसारादपूपः, [9]कठानां शाकमिति व्यवस्था स्वगृह्यादौ विशेषानुक्तौ तुल्यवद्विकल्प [10]एवेति बोद्धव्यम् ।

भविष्यपुराणे—[11]महादेव उवाच

पौषे मासि यदा [12]देवि शुक्लाष्टम्यां बुधो भवेत् ।
15 तदा च सा महापुण्या महाभद्रेति कीर्तिता ।

---

१ ख द्वादशप्रसृतिभि र्वा
२ ग विष्णुः नास्ति, ख ङ वसिष्ठ (विष्णु स्थले)
३ ख वराहे, ङ वाराहपुराणे
४ ग वराह उवाच नास्ति, ङ वाराह उवाच
५ क द्विज
६ ङ च (तु स्थले)
७ ख ङ वचनात्, ग उपसंहारात् (वचनान्तरात् स्थले)
८ ख विकल्पो वेदितव्यः
९ ख कव्यानां, ग कठानां तु
१० ग एव नास्ति
११ ङ देव (महादेव स्थले)
१२ देव (देवि स्थले)

[1]तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
[2]मत्प्रीतये कृतं देवि शतसाहस्त्रिकं भवेत् ॥
तस्मात्तस्यां महादेव पूज्योऽहं विधिवद् बुधैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥

पौषपौर्णमासीमधिकृत्य [3]ब्रह्मपुराणे 5

पुष्ययोगे च कर्त्तव्यं राज्ञा स्नानं च सर्वदा ।

[4]विष्णुः

पौषी चेत् पुष्ययुक्ता स्यात् तस्यां गौरसर्षपकल्केनोत्सादितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः [5]सर्वौषधीभिः सर्वगन्धैः सर्ववीजैश्च स्नातो घृतेन भगवन्तं [6]वासुदेवं स्नापयित्वा [7]पुष्पगन्धनैवेद्यादिभिश्चाभ्यर्च्य [8]वैष्णवैः 10 सूक्तैर्वार्हस्पत्यैश्चान्द्रमसैर्मन्त्रैः [10] पावकं हुत्वा सुवर्णेन घृतेन च [11]ब्राह्मणं स्वस्ति

१ ग तत्र
२ ङ सर्वेषां हिताय
३ ख ब्रह्मपुराणे नास्ति
४ क तथाह विष्णुः
५ क सर्वौषधीभिः नास्ति
६ ख वासुदेवं नास्ति
७ क गन्धपुष्पं
८ ङ गन्ध नास्ति
९ क वैष्णवसूक्तैः
१० ख ग ङ चान्द्रमसैः नास्ति
११ ख आगतं ब्राह्मणं

8-1 (पृ° १९०) विष्णुसंहिता, ९०, ३-५ पाठभेदः—कल्कोद्वर्त्तितशरीरो, गन्धपुष्पधूपदीपं, शाक्रैः (सूक्तैः स्थले), चान्द्रमसै नास्ति, पावके, ससुवर्णेन, च नास्ति, ब्राह्मणान् (ब्राह्मणं स्थले),

वाचयेत्। वासोयुगं च कर्त्रे दद्यात्। अनेन [1]कर्मणा [2]पापेभ्यो मुच्यते।
उत्सादितशरीरः उद्वर्त्तितशरीरः।

[3]ब्रह्मपुराणे

कृष्णाष्टम्यां तु माघस्य मांसश्राद्धमहाफलम्।
5 [4]पितृभिः प्रार्थितं पूर्वं [5]तस्मात्तत्रैव कारयेत्॥

इदं सर्वशाखिसाधारणम्।

भविष्यपुराणे

माघे मासि तृतीयायां गुड़स्य लवणस्य च।
दानं श्रेयस्करं राजन् [6]स्त्रीणां च पुरुषस्य च।
10 गुड़ेन तुष्यते [7]देवी लवणेन स्वयं प्रभुः॥

स्त्रीणां धन्येयमिति प्रागुक्तम्।

ब्रह्मपुराणे

[8]उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः।
प्राग् भक्षयित्वा सृष्टा च भूयः स्वाङ्गां गजैर्गुणैः॥
15 सहिताः ससृजु र्यस्मात् तस्मात् प्रोक्ता उमा सती।
तस्मात् सा [9]तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः॥

---

१ ग सुकृतेन
२ क ख पापेभ्यः नास्ति
३ ख ब्राह्मे
४ ङ विद्वद्भिः
५ क ख तस्मात् तत्र तु
६ ङ नारीणां (स्त्रीणां च स्थले)
७ देवि
८ ग उमाचतुर्थी
९ ख ङ तत्र तास्ति

---

च नास्ति, पष्यते (पापेभ्यो मुच्यते स्थले)

कुन्दपुष्पैः प्रयत्नेन उपवासैः समाहृतैः ।
कुङ्कुमालक्तकाभ्यां च रक्तसूत्रैः सकङ्कणैः ॥
अर्घैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च ।
गुड़ार्द्रकाभ्यां पयसा [1]लवणेन च [2]यावकैः ॥
पूज्याः स्त्रियश्च विधवास्तथा विप्रैश्च भाजनैः । 5
सौभाग्यवृद्धये यस्माद् भोक्तव्यं बन्धुभिः सह ॥

कुन्दचतुर्थीव्रतं प्रागेव दर्शितम् ।

[3]गौड़ग्रन्थेषु

[4]माघे सितचतुर्थ्यां तु वरमाराध्य च स्त्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजा कार्या समृद्धये ॥ 10

वरो विनायकः । लोकेऽपि वरचतुर्थी [5]श्रीपञ्चमीति च [6]प्रसिद्धगौड़स्मृत्या संवदति ।

ब्रह्मपुराणे

शुक्लायां माघसप्तम्यां पूषा नाम महान् रविः ।
आदित्यां कश्यपाज्जातः सहस्रकिरणोज्ज्वलः ॥ 15
तस्मात् तं पूजयेत् तत्र सोपवासो जितेन्द्रियः ।
अर्घैः पुष्पैस्तथा दीपैर्धूपैर्भक्ष्यैर्मनोरमैः ॥
नृत्यैर्गीतैस्तथा वाद्यैर्होमैर्ब्राह्मणतर्पणैः ।

---

१ ग ङ लवणेनाथ
२ ङ पावकैः
३ क ख ङ गौड़ग्रन्थे
४ ग माघ्यसित°
५ ख श्रीपञ्चमीति प्रसिद्धा
६ क प्रसिद्धिः गौड़स्मृत्यां संवदति
७ क °भोज्यैः (भक्ष्यैः स्थले)

अष्टम्यां च पुनर्भक्ष्यैः पूज्यो मधुघृतप्लुतैः ।
भक्ष्याणि [1]तानि देयानि भक्षितव्यानि तानि च ॥

अग्निमतामिति[2] पदं देयं [3]भक्ष्यपरम् । मन्वन्तरादिश्चेयं सप्तमी ।
[4]गौड़स्मृतिः

5 सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
तस्यां स्नानं च दानं च महापातकनाशनम् ॥

तथा

अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।

अत्रार्कपत्रसप्तकं वरदपत्रसप्तकं च [5]शिरसि निधाय

10 [6]ओं यद् यज्जन्मकृतं पापं [7]मया सप्तसु जन्मसु ।
तन्मे रोकं च शोकं च माकरी हन्तु सप्तमी ॥

इति मन्त्रेण स्नाति ।

ओं जननी सर्वभूतानां सप्तमी सप्तसप्तके ।
सप्तव्याहृतिके देवि नमस्ते सूर्यमण्डले ॥

---

१ ख नाम
२ ख इति नास्ति
३ क ङ सजातीयभक्ष्यपरम्
४ ख तथा गौड़स्मृतिषु
५ ख ङ मूर्ध्नि
६ क ओं नास्ति
७ ग मया जन्मनि जन्मनि

---

5 रघुनन्दन, तिथितत्त्व, पृः ३७ पाठभेदः—शुक्लमाघस्य
8 रघुनन्दन, तिथितत्त्व, पृ ३७
9 रघुनन्दन, तिथितत्त्व, पृः ३९
10-11 रघुनन्दन, तिथितत्त्व, पृः ३९ पाठभेदः—रोगं च (रोकं च स्थले)

इति मन्त्रेणार्घ ददाति। रोकं छिद्रम्, रोगमिति पाठान्तरम्। अष्टम्यां देवादितर्पणं निर्वर्त्य [1]भीष्माय जलदानम्। तत्तु देवविधिना,

> वैयाघ्रपदगोत्राय सांकृतिप्रवराय च ।
> [2]अपुत्राय ददाम्येतच्छलिलं भीष्मवर्मणे ॥

[3]इति मन्त्रेण नमस्कारदर्शनात्। [4]व्रतस्य [5]च गौडस्मृतिराचारो वा [6]प्रायकं प्रमाणमिति। तद्बलात् [7]सर्ववर्णविषयतया असवर्णजल[8]दाननिषेधस्तु [9]प्रकरणाद[10]पि भ्रात्रादिविषयः। 5

ब्रह्मपुराणे

> पौर्णमास्यां [11]मघायोगे वायसाः पञ्च जज्ञिरे ।
> [12]इन्द्राच्च वरुणाद् वायोर्यमादप्यथ निरृतेः ॥ 10
> श्राद्धं पितृभ्यः कर्त्तव्यं तिलैः पूज्यास्तथा [13]द्विजाः ।
> ऐन्द्रवारुणवायव्या याम्या वै नैरृतास्तथा ॥
> वायसाः पुण्ययशसस्ते मे गृह्णन्तु भोजनम् ।
> दद्यादनेन मण्त्रेण तेभ्यो भक्तं मधुप्लुतम् ॥

---

१ ग भीष्माय ..... ..... तत्तु नास्ति
२ ग अपुत्राय जलं दद्यात् नमस्ते भीष्मवर्मणे
३ क इति मन्त्रेण नास्ति
४ ङ एतस्य च (व्रतस्य च स्थले)
५ क च नास्ति
६ ख प्रायकं नास्ति
७ ग सर्वविषयतया
८ ग दान नास्ति
९ ङ प्रकरणादिति
१० ग अपि नास्ति
११ ग माघयोगे
१२ क ख इन्द्राय
१३ क ख ङ किल

---

3–4 रघुनन्दन, तिथितत्त्व, पृः ५८ पाठभेद :—पद्य (पद स्थले)

ब्राह्मणान् भोजयित्वा तु भुञ्जीरन् बन्धुभिः सह।

तथा

मघास्थयोस्तु जीवेन्दोर्म[1]हामाघीति कीर्त्तिता।

देवीपुराणे

5 माघ्यां पूजा प्रकर्त्तव्या देवीं वा मङ्गलां यजेत्।

दानमन्त्रं तु प्रागुक्तम्। युगादिश्चेयं माघी।

[2]विष्णुः

मघायुक्ता चेन् माघी स्यात् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति। नित्यश्राद्धकालेष्वपि माघी विष्णुना [3]कथिता।

10 देवीपुराणे

[4]धेनुं गुडमयीं माघ्यां दद्याच्चैवोत्तरायणे।
सर्वकामानवाप्नोति ज्यैष्ठे जलमयीं तथा॥

[5]यमः

तिलप्रदः प्रजामिष्टां पुरुषः खलु विन्दति।
15 माघमासे विशेषेण [6]तमिस्रे तु विशेषतः॥

---

१ क महामाघी विकीर्त्तिता
२ ङ विष्णुः नास्ति
३ क पठिता
४ ग देवीं (धेनुं स्थले)
५ ग यमः नास्ति
६ ख ङ तमिस्रे (तमिस्रे तु स्थले)

---

8 विष्णुसंहिता, ६०. ६ पाठभेदः—माघी मघायुता चेत् (मघा—स्यात् स्थले)

11–12 देवीपुराण, १०४. ५

माघे मासि तिलान् यस्तु [1]ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्त्वसमाकीर्णं नरकं स न [2]पश्यति ॥

[3]माघमास्यग्निं प्रत्यहं तिलैर्हुत्वा घृतकुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति । माध्यनन्तरमष्टकायां [4]छन्दोगवाजसनेययोः शाकैः श्राद्धं, कठानामपूपैः इतरेषां विकल्पः । तदेवमाग्रहायण्यूर्ध्वं तिस्रोऽष्टकाः प्रोक्ताः । अपरपक्षीया च प्रागेवोक्ता [5]इति चतस्रोऽष्टकाः । तासु आवश्यकं श्राद्धम् । 5

पितरस्तिथिकालेषु पर्वकालेषु देवताः ।
सर्वे गृहस्थमायान्ति निपानमिव धेनवः ॥
यस्यैते प्रतिगच्छेयुरष्टकास्व[6]प्यपूजिताः ।
मोघास्तस्य भवन्त्याशाः परत्रेह च देहिनः ॥ 10

इति श्रवणादष्टकोत्तरदिनरूपास्वन्वष्टकास्वपि चतसृषु नित्याधिकारः,

अन्वष्टका पितॄणां [7]तु नित्यमेव विधीयते

इत्यभिधानात् । [8]अत्राप्यष्टकावदेव श्राद्धं मातृपितामहीप्रपितामही-श्राद्धमपि तत्रेति विशेषः । तत्र पूर्वमाभ्युदयिके तथा दर्शनात् । पाश्चात्त्यास्तु पुरुषत्रयश्राद्धोत्तरं स्त्रीश्राद्धमाचरन्ति, तन्न, [9]मातामहादिश्राद्धस्य पित्रादि- 15 श्राद्धानन्तर्यबाधापत्तेः । अन्वष्टकाश्राद्धे [10]साग्नेरेवाधिकार इति निर्णीत-मस्माभिः श्राद्धकल्पे । अत्र च शाकादीनामेव प्राधान्यम् ।

---

१ क ब्राह्मणाय
२ ख गच्छति
३ ख माघे मासि
४ ग छन्दोग° ··· ·· ···प्रोक्ताः नास्ति
५ ख ग ङ इति चतस्रोऽष्टकाः नास्ति
६ ख ग ङ प्रपूजिताः
७ क ख तु नास्ति
८ क अष्टकायां च देवश्राद्धं
९ ङ मातामहश्राद्धस्य
१० ग साग्नेरेवाधिकारे सति (साग्नेरेवाधिकार इति स्थले)

अनुग्राहकतया तु भक्ताद्यनुप्रवेशः। अन्यथा अतृप्तियोगादित्याहुः। अत्र च मते शाकेनैवाग्नौकरणं पिण्डदानं च [1]अस्यैव हविष्यात्। वस्तुतस्तु 'शाकं [2]व्यञ्जनमाहार्यम्' इति गोभिलानुसाराद् व्यञ्जनत्वेन [3]शाकादीनां विधिः। लिङ्गाच्च [4]व्यञ्जनान्तरनिवृत्तिः अयोगव्यावृत्याविशेषणत्वात्
5 अन्यथा बाधात्। तस्मादष्टकाश्राद्धेऽन्नमेव प्रधानम्। अत एव

नवोदके नवान्ने च गृहप्रच्छादने तथा।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥

इत्यत्र स्पृहा कीर्त्तनम्। [5]न चैवमद्यते भक्ष्यते इति व्युत्पत्त्यान्नप्रदानात् [6]शाकादीनामेवात्र परिग्रह इति साम्प्रतम्। योगाद् रूढेर्बलवत्वात,
10 योगस्य च साधुत्वात्, व्याख्यानप्रकारमात्रत्वपर्यवसानेनान्यथासिद्धत्वात्। अन्यथा गच्छतीति गौरिति योगबलाद् गर्दभादीनामपि गोत्वापत्तेरित्यलमर्थान्तरेण।

ब्रह्मपुराणे

अथ कृष्णचतुर्दश्यां फाल्गुने मासि शंकरः।
15 ब्रह्मविष्णु मोहयित्वा ज्वालालिङ्गेन मायया ॥
जगल्लिङ्गसहस्रैस्तु पूजयामास तत्क्षणात्।
ततः प्रभृति रूढा च लिङ्गपूजा कपर्दिनः ॥

रूढा जाता।

[7]गौडमृत्तिकया लिङ्गं [8]तस्मात्तत्र सुशोभनम्।
20 कुर्यात् प्रमाणसंयुक्तं त्रयोदश्यामुपोषितः।

---

१ ग तस्यैव
२ क व्यञ्जनमन्वाहार्यमिति
३ क ख ङ शाकादीनां नास्ति
४ क ग व्यञ्जनान्तरे निवृत्तिः
५ क ङ न चैवमद्यते ······ अर्थान्तरेण (12) नास्ति
६ ख शाकादीनामेवान्नपरिग्रह
७ ङ गौर°
८ ख तस्मात् नास्ति

---

6–7 रघुनन्दन, तिथितत्व, पृः ५६ पाठभेदः—सदा (तथा स्थले)

देवोत्थानविधानोक्तैर्द्रव्यैस्तच्च प्रपूजयेत् ॥

देवोत्थानविधानोक्तैः पुष्पधूपनैवेद्यैश्चेत्यादिना, द्रव्यैर्वीरक्रयाहृतै-[1] रित्यनेन ग्रन्थेन ब्रह्मपुराणोक्तैः।

अर्घैः सुगन्धैर्माल्यैश्च रत्नैर्वस्त्रानुलेपनैः ।
नैवेद्यैर्विविधाकारैर्होमैर्ब्राह्मणतर्पणैः ॥ 5
भुक्त्वा रात्रौ ततः कार्यो नृत्यगीतप्रजागरः ।
श्रोतव्याः शिवधर्माश्च प्रादुर्भावाश्च [2]शांकराः ॥
अहिंसालक्षणं[3] धर्मं समाश्रित्याथ शंकरः ।
[4]भक्ष्यैः [5]पिष्टमयैः [6]पूज्यः पशुभिश्च स्वलङ्कृतैः ॥
अमावास्यां तु पूज्यास्तु [7]रुद्रोऽग्निर्वरुणस्तथा । 10
लोके त्वागमकल्पेन शिवरात्रिव्रतं [8]चरेत् ॥

अत्र त्रयोदश्यामेकाहारश्चतुर्दश्यामुपवासः रात्रिप्रहरचतुष्टये [9]शिव-पूजा जागरश्च। शिवालये [10]अन्यत्र वा शिवलिङ्गमुपस्थाप्य व्रतमिदं कर्तव्यम्। [11]यथाशक्ति घृतादिना लिङ्गस्नानं शिवायेति पूजा चेति। कृत्तिवासेश्वरं फाल्गुनकृष्णचतुर्दश्यां[12] प्रकृत्य 15

लिङ्गपुराणे

उपोष्य रजनीमेकां ब्रह्महत्यां व्यपोहति ।

---

१ ख वीरक्रिया°, ग वीरकृपा°
२ ख शंकराः
३ ख ङ लक्षणं नास्ति
४ ख ङ रम्यैः
५ ग मत्स्यैः इष्टमयैः (भक्ष्यैः पिष्टमयैः स्थले)
६ ङ पूज्यैः (पूज्यः स्थले)
७ ख वाय्वग्नि(रुद्रोऽग्नि स्थले)
८ ग प्रचरति (चरेत् स्थले)
९ क ङ पूजा (शिवपूजा स्थले)
१० ग अन्यत्रापि
११ ङ यथा (यथाशक्ति स्थले)
१२ क चतुर्दशीं

विष्णुपुराणे

माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां नह्यल्पपुण्यै र्नृप लभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तस्मिन् भवन्ति भूपाल तदा पितृभ्यः ।
5 दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं [1]भक्तजनैर्मनुष्यैः ॥
तत्रैव चेद् भाद्रपदास्तु पूर्वा काले यदा [2]यत् क्रियते मनुष्यैः ।
श्राद्धं तदा तृप्तिमवाप्य तेन युगं सहस्रं पितरः [3]स्वपन्ति ॥

अत्र माघ्यनन्तरं पक्षस्यैव शुक्लादिमासरीत्या[4] माघ्यसितत्वमुक्तम् ।

ब्रह्मपुराणे

10 फाल्गुन्यामर्यमा जातस्त्वदितौ [5]कश्यपादपि ।
अत्र चाप्यनसूयायां जातः पूर्वमयं शशी ॥
तौ तत्र पूज्यौ विधिवत् प्राप्ते चन्द्रोदये सति ।
नृत्यगीतैस्तथा वाद्यैः रात्रौ कार्यः प्रजागरः ॥

विष्णुः

15 फाल्गुनी फल्गुनीयुक्ता चेत् [6]स्यात् तस्यां ब्राह्मणाय सुसंस्कृतं [7]विस्तीर्णं शयनं निवेद्य भार्यां मनोज्ञां [8]पक्ष्मवतीं द्रविणवतीं [9]बन्धुमतीं

---

१ ख तत्पुरुषै र्मनुष्यैः
२ ख तत्
३ क ख ङ पिबन्ति
४ ख मास नास्ति
५ ङ कश्यपादिति
६ क ख स्यात् नास्ति
७ ङ विशीर्णं
८ ग पक्ष्मवतीं नास्ति
९ क बन्धुमतीं नास्ति

---

2–7 विष्णुपुराण, ३. १४. १६–१८ पाठभेदः—ततकुलजैर्मनुष्यैः, पितृभ्यः (मनुष्यैः स्थले), श्राद्धं परां तृप्तिमुपेत्य, समग्रं (सहस्रं स्थले)

15–1 (पृ० १९९ भर्तारं) विष्णुसंहिता ९०. ७–८ पाठभेदः—युता (युक्ता स्थले), स्वास्तीर्णं (विस्तीर्णं स्थले), रूपवतीं (पक्ष्मवतीं स्थले), बन्धुमतीं नास्ति

चाप्नोति । नार्यपि भर्त्तारं पक्षमवन्तं भ्रात्रादिबन्धुसम्मतम् [1] ।

पद्मपुराणे

[2]चैत्रे मासि महाबाहो पुण्या प्रतिपदा[3]परा ।
तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तम ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो न च । 5
भवन्ति कुरुशार्दूल तस्मात् स्नानं समाचरेत् ।
दिव्यं नीराजनं [4]विद्धि सर्वरोगविनाशनम् ॥

ब्रह्मपुराणे

अथ चैत्रस्य [5]कृष्णायां प्रतिपद्यपि सर्वदा ।
[6]झल्लमल्लभटानां च द्रष्टव्यं कौशलं महत् ॥ 10
प्रतिपत्तः समारभ्य पञ्चमी यावदेव हि ।
[7]पूजाकर्म तथा कार्यं स्त्रीजनस्यात्मनस्तथा ।
भोजनं चाथ विप्राय भोज्यं देयं च याचते ॥

झल्लमल्लौ सङ्करजातिविशेषौ ।

तथा 15

सवः स्वजन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीया विशेषतः ॥

---

१ ग बन्धु नास्ति
२ क चैत्रमासि
३ ग वरा (परा स्थले)
४ क तद्धि (विद्धि स्थले)
५ ङ कृष्णायां नास्ति
६ क झल्लमल्लनटानां च, ग झल्लमल्लनराणां च
७ ङ तस्मात् कर्म

---

16–2 (पृ० २००) रघुनन्दन, तिथितत्त्व, पृ० २१ पाठभेद :—सवश्च ( सवः स्व स्थले), प्रयत्नतः ( विशेषतः स्थले),

स्वनक्षत्रं च पितरौ तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं यत्नात् [1]कर्त्तव्यश्च महोत्सवः ॥

जन्मदिवसे जन्ममासपक्षतिथौ [2]स्नाति तिलसर्षपैराचारात्। मङ्गलं कनकदूर्वादिसर्वैरिति स्वरसात् प्रतिसंवत्सरमित्य[3]भिधानाच्च नित्याधिकारः ।

5 [4]अत्र च

तिलोद्वर्त्ती तिलस्नायी शुचिर्नित्यं तिलोदकी ।
दाता होता च भोक्ता च षट् तिली नावसीदति ॥

इति [5]सामान्यवचनं [6]नित्यपदमुल्लङ्घ्यादिजन्मदिवसे योजयन्ति। अश्वत्थामबलिव्यासहनुमद्विभीषणकृपपरशुराममार्कण्डेयान् संपूज्य मार्कण्डेयं प्रार्थयन्ति

10 मार्कण्डेय महाभाग सप्तकल्पान्तजीवन।
चिरजीवी यथा त्वं भो भविष्यामि [7]तथा मुने॥ इति।

मधुरमश्नन्ति आमिषं [8]वर्जयन्ति ब्रह्मचर्यं चाचरन्ति ।

[9]इति महामहोपाध्यायश्रीदत्तकृते समयप्रदीपे संवत्सरकृत्यपरिच्छेदो द्वितीयः।

---

१ क ख ङ कर्त्तव्याश्च महोत्सवाः
२ क स्नानं
३ ग अभिधानाच्च नास्ति
४ क अत्र च नास्ति
५ ङ सामान्यवचनमित्यतः नित्यवचनम् अधिकः पाठः
६ ख नित्यपदार्थम्
७ ग तव
८ ग वर्जयित्वा
९ ग इति श्रीश्रीदत्तकृतौ, क इति श्रीसमयप्रदीपे श्रीदत्तकृतौ वत्सरकृत्यं द्वितीयपरिच्छेदः

---

चैव (यत्नात् स्थले)
6–7 रघुनन्दन, तिथितत्त्व, पृः २१, एकादशीतत्त्व, पृ० १०१ बहवः पाठभेदाः
10–11 रघनन्दन, तिथितत्त्व, पृ० २१, ११३--११४

[1]अथ संक्रान्तिविचारः ।

शातातपः

संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥

[2]तथा 5

अयनादौ तथा देयं [3]द्रव्यमिष्टं गृहेषु यत् ।
षडशीति मुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥

अयनं सूर्यस्य, मकरगमने उत्तरम्, कर्कटगमने दक्षिणम् । आदिपदेन विषुवविष्णुपद्योर्ग्रहणम् । तुलागमने मेषगमने च [4]विषुवे विष्णुपदीस्वरूपं षडशीतिस्वरूपं चान्यत्रोक्तम् । 10

धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता ॥

इति [5]ज्योतिःशास्त्रम् ।

रविसंक्रमणे पुण्ये न स्नायाद् यस्तु मानवः ।
सप्तजन्मान्यसौ रोगी दरिद्रश्चोपजायते ॥ 15

[6]संक्रान्तिं प्रकृत्य देवीपुराणे

एकधापि कृतं तस्मिन् कोटिकोटिगुणं भवेत् ।
धर्माद् विवर्धते ह्यायुः राज्यपुत्रसुखानि च ॥

---

१ क ख ङ अथ .... विचारः नास्ति
२ क तथा नास्ति
३ क ग हव्यमिष्टं
४ ङ विषुवम्
५ क स्मृतिःज्योतिःशास्त्रम्
६ ग संक्रान्तिं प्रकृत्य नास्ति

---

17--18 रघुनन्दन, एकादशीतत्त्व, पृ० ६ पाठभेदः—राज्यं पुत्रसुखादि च

अधर्माद् व्यधिशोकादिविषुवायनसन्निधौ।
विषुवेषु च यज्जप्तं दत्तं भवति चाक्षयम् ॥[1]

तथा

षड़शीति मुखेऽतीते वृत्ते च विषुवद्वये ।
5 भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥

अयने दक्षिणे वा परिशेषात्। एवं च

यावद् विंशत् कला भुक्तास्तत् पुण्यं तूत्तरायणे ।
निरंशे भास्करे दृष्टे दिनान्ते दक्षिणायने ॥

इत्यत्र विंशतिदण्डपुण्यत्वं सक्रान्त्यनन्तरम् । दिनान्ते दिनं त्रिंशन्नाड्य-
10 स्तदन्ते तत्पर्यन्तमिति यावत्। एतच्च संक्रान्तेः पूर्वं [२]पण्यत्वम् । [३]निरंशे भास्करे दृष्टे इति उत्तरायणमात्रसम्बन्धि ।

शातातपः

अर्वाक् षोडश विज्ञेया नाड्यः पश्चाच्च षोडश।
कालः पुण्योऽर्कसंक्रान्तेः विद्वद्भिः परिकीर्त्तितः ॥ इति ।

15 इदं [४]दिवातनविष्णुपदीमात्रे। तदेवं दिवातनीषु द्वादशस्वपि संक्रान्तिषु [५]व्यवस्था । रात्रिसंक्रान्तिषु देवीपुराणे

मानार्धं भास्करे [६]पुण्यमपूर्णे शर्वरीदले ।
संपूर्णे [७]तूभये देयमतिरेके [८]परेऽहनि ॥

---

१ ङ एवं विष्णुपदे चैव षडशीति मुखे तथा अधिकः पाठः
२ क ख पुण्यत्वं नास्ति
३ क निरङ्गे (निरंशे स्थले)
४ ख ग ङ दिवातन नास्ति
५ ङ व्यवस्था सिद्धा
६ क पुण्यमपूर्वे
७ क तूभयोर्देयम्, ख तूभये ज्ञेयम्
८ क यदेहनि (परेऽहनि स्थले)

---

1–2 रघुनन्दन, एकादशीतत्त्व, पृ० ६ पाठभेदः—यद् दत्तं जप्तं
17–18 देवीपुराण, २४. १५ पाठभेदः–°दिने (°दले स्थले), उभयोर्ज्ञेयम् (तूभये देयम् स्थले)

मानार्धं दिनार्धं, भास्करे निरंशे इति शेषः। देयं योज्यम्। दलेऽर्धे-ऽतिरेकेऽर्धरात्रोपरि। तेनायमर्थः। अर्धरात्राभ्यन्तरे संक्रान्तौ पूर्वदिनोत्तरार्धं, [1]अर्धरात्रोत्तरं संक्रान्तावुत्तरदिन[2]पूर्वदिनोत्तरार्धं पुण्यम्। [3]संपूर्णार्ध[4]रात्र-संक्रान्तौ पूर्वदिनोत्तरार्धमुत्तरदिनपूर्वार्धं च पुण्यं तिथिभेदे सति। यदि तु पूर्वदिने संक्रान्तिकाले चैकैव तिथिर्भवति तदार्ध[5]रात्रसंक्रान्तौ पूर्वदिनार्धमेव पुण्यम्। 5

आदौ पुण्यं विजानीयाद् यद्यभिन्ना तिथिर्भवेत्

इत्यभिधानात्। नन्वेवं रात्रिसंक्रमणेऽपि दिवैव पुण्याभिधानात्

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्यान्निशि काम्यव्रतेषु च॥ 10

इति रात्रौ संक्रान्तिकृत्यकथनं देवलवचनं [6]निर्विषयतामापद्येत। मैवं, रात्रिसन्निहितदिवासंक्रान्तौ षोडशनाड्यादिविहितकालेन रात्रेरपि व्यापनात् तद्विषयतयोपपद्यत इति।

अत्र च निशीतिपदम् अपराह्णोपरिभूतकालसहितनिशापरम्। तेन दिन-पञ्चमभागात्मकसायाह्ने[7]ऽपि प्रकृतकृत्यं सिध्यति। अन्यथा 15

राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु

---

१ ग अर्थ ……… पुण्यं नास्ति
२ ङ पूर्वदिनार्धमेव पुण्यम्
३ ग पूर्णपूर्णार्धरात्रसंक्रमणे (संपूर्णार्धरात्रसंक्रान्तौ स्थले)
४ ङ संपूर्णा………… पुण्यं नास्ति
५ क रात्र नास्ति
६ क निर्विषयमापद्येत
७ ग मध्याह्नेऽपि

---

9–10 रघुनन्दन, तिथितत्त्व, पृः १४३, उद्वाहतत्त्व, पृः १४१ पाठभेदः—कुर्युः (कुर्यात् स्थले)

इत्यनेन सायाह्ननिषेधात्तत्र विवाहादिकं [1]व्रात्यकृत्यमापद्यते ।

[2]अथ ग्रहणविचारः ।

जावालिः

संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।
5 चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥

यावदितिपदेन संक्रान्तिवन्न पूर्वापरकालयोः पुण्यत्वं किन्तु ग्रासावच्छिन्नस्येति दर्शितम् । अत्र हरिहरो मेघादिच्छन्नस्यापि[3] [4]निमित्तत्वमाह, ग्रासावच्छिन्नकालस्य गणितप्रमितत्वात् दर्शनपदस्य च तदुपलक्षकत्वात् । न च दर्शनविषयत्वमेव प्रयोजकं, कर्मकाले तदभावात् । [5]निश्चयपरं दर्शनपदं
10 गुरुदर्शनादौ तथा दर्शनात् । [6]नन्वेवं दिवा चन्द्रग्रहे रात्रौ रविग्रहे च [7]पुण्यकालत्वापत्तिः । तयोः राज्ञो निवेदनीयत्वेन [8]ज्योतिःशास्त्रेणाभिधानादिति चेत् न, दर्शनपदस्य निरुपाधेश्चाक्षुषज्ञान एव प्रवृत्तेः । [9]स्थावरं गोचरपदम् । न च मेघादिच्छन्ने [10]सा, [11]अत एव दिवातनचन्द्रग्रहणरात्रिकालीनसूर्यग्रहणयोरपि[12] निवृत्तिः । [13]ज्योतिःशास्त्रात् [14]कालनियममात्रपरस्य
15 तस्य धर्मशास्त्रोक्तकर्म[15]बाधाभावात् । अत एव

---

१ ख ङ व्रात्यकृत्यमापद्येत
२ क अथ....विचारः नास्ति, ख ङ अथ ग्रहणकालः
३ ग अपि नास्ति
४ ख ङ पुण्यत्वमाह
५ ग निश्चयपदं
६ क ख ङ न चैवं (नन्वेवं स्थले)
७ ख ङ पुण्यकालत्वापत्तेः
८ क ख ङ ज्योतिःशास्त्रे (ज्योतिःशास्त्रेण स्थले)
९ ग ङ तद्विषयत्वयोग्या च अधिकः पाठः, क तद्विषयत्वयोग्यत्वात् अधिकः पाठः
१० ग सा नास्ति
११ ग शाश्वत एव
१२ ख ग ङ अपि नास्ति
१३ क ख न च ज्योतिःशास्त्रात्
१४ क कालनियममात्रपरं बोधकस्य तस्य शास्त्रोक्तकर्मबोधाक्षमत्वात्
१५ °कर्मबोधाक्षमत्वात्

स्नानं दानं तपः श्राद्धमनन्तं [1]राहुदर्शनम

इत्यादौ राहुदर्शनं विवक्षितम्। लोका अपि दर्शनमेवाद्रियन्ते। न चैवं दर्शनानन्तरं मेघाच्छन्ने अधिकारनिवृत्त्यापत्तिः। [2]कदाचिद् दर्शनयोग्यविषयस्य निमित्तस्य [3]विद्यमानत्वात् सर्वदा यस्य ग्रासस्य दर्शनायोग्यता तस्य [4]व्यावृत्तिः। अयोग्यता [5]दुर्निरूप्येति चेत् न। 5
[6]प्रयत्नापनेयप्रतिबन्धयोगित्वमयोग्यता। [7]सा च मेघादिच्छन्ने विद्यते न तु गुल्मादिव्यवहिते। किं च दर्शनयोग्यत्वं यदि कोऽपि पश्यति तदा ज्ञायते। यदि तु पर्वतादिव्यवधानान्न कोऽपि पश्यति तदा मा भूत् पुण्यकालत्वम्। कल्पतरौ तु [8]निमित्तबलादेव ज्ञानमात्रलाभे दर्शनपदोपादानबलाच्चाक्षुषज्ञानविषयत्वं प्रयोजकम् इत्युक्तम्। 10

[9]स्मृतिः

नाद्यात् सूर्यग्रहात् पूर्वमह्नि सायं शशिग्रहात्।
ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाच्च मुक्तयोः॥
मुक्ते शशिनि भुञ्जीत [10]यदि न स्यान् महानिशा।
स्नात्वा दृष्ट्वा परे ह्यस्मात् ग्रस्तास्तमितयोस्तयोः॥ 15

महानिशात्र सार्ध[11]प्रथमप्रहरानन्तरं मुहूर्त्तचतुष्टयमिति कल्पतरुकारः।

---

१ ग राहुदर्शनमित्यादौ नास्ति
२ ग कदाचिद् दर्शनेऽपि दर्शनयोग्यविषयस्य
३ ख ग ङ विधानात् (विद्यमानत्वात् स्थले)
४ क व्याहृतिः
५ क न निरूपितेति, ङ अनिरूप्येति
६ क प्रयत्नानयनेप्रतिबन्धयोगित्वमयोग्यात्
७ ग सा च इत्यतः पूर्वम् तदभावे योग्यता अधिकः पाठः
८ ङ निमित्तत्वबलादेव
९ ख स्मृतिः नास्ति
१० क यदि स्यान्न महानिशा
११ ख ङ प्रथम नास्ति

शातातपः

अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो [1]यदा।
मुक्तं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः॥
सूर्याचन्द्रमसोर्लोकान्नक्षयान् याति मानवः।
5 [2]धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत्॥

मुक्तदर्शनानन्तरं भोजनविधानात् अहोरात्राभोजनमदर्शनपक्षे सूर्याचन्द्रमसोरित्यादिना फलनिर्देशात् काम्यत्वम्। कामनाविरहे तु 'नाद्यात् सूर्यग्रहात् पूर्वमह्नी'त्यादिवाक्यादेव व्यवस्था।

एवं च मुक्तयोः सूर्याचन्द्रमसोः अस्तमये अदर्शनपक्षे[3]ऽपि भोजन-
10 मदोषं 'स्नात्वाश्नीयाच्च मुक्तयो'रित्युक्तेः। फलार्थिना तु [4]मुक्तदर्शनाभावे न भोक्तव्यम्। [5]'मुक्तं दृष्ट्वे'ति शातातपवचनात्। पठन्ति [6]चात्र

अर्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत्।
सायं तत्र न भुञ्जीत न तु प्रातरभोजनम्॥

ब्रह्मपुराणे

15 नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतिपाते च पर्वसु॥

---

१ ख पदे
२ ख धौतपापो
३ क ख अपि नास्ति
४ ग मुक्तदर्शनाभावे भोक्तव्यम्
५ ग मुक्तं नास्ति
६ ख ङ अत्र नास्ति

---

7-3 रघुनन्दन, तिथितत्त्व, पृः १५८ सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्

15-2 (पृः २०७) रघुनन्दन, तिथितत्त्व, पृः १०५ पाठभेदः—नित्यं (तथा स्थले), व्यतीपातेषु सर्वसु, दानं श्राद्धम्

अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपम् ।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥ [1]इति ।

देवीपुराणे

ये सूर्ये सहिकेयेन ग्रस्तेरेवाजलं जनाः ।
स्पृशन्ति चावगाहन्ते न ते प्रकृतमानुषाः ॥ 5
[2]श्रुत्वा क्रतुशतं पुण्यं दृष्ट्वा गोदानजं फलम् ।
स्पृष्ट्वा गोमेधतुल्यं तु पीत्वा सौत्रामणिं लभेत् ॥
स्नात्वा वाजिमुखं पुण्यं प्राप्नुयादविचारतः ।
रविचन्द्रोपरागे तु अयने चोत्तरे तथा ।
एवं गङ्गापि बोद्धव्या यद्वदेव सरस्वती ॥ 10

[3]तथा

उषरारण्यक्षेत्रेषु पुण्यं यत् समुदाहृतम् ।
[4]तदत्रकालमाहात्म्यादुपरागेऽधिकं भवेत् ॥

उषरादयः पुण्यदेशप्रभेदाः ।]

[5]कर्मप्रदीपः 15

स्वधुन्यम्भस्समानि स्युः सर्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥

---

१ ग इति नास्ति
२ क स्मृत्वा
३ ख तथा नास्ति
४ क ख तत्तत् (तदत्र स्थले)
५ कर्मप्रदीपः नास्ति

---

15–(पृः २०६)–2 रघुनन्दन, एकादशीतत्त्व, पृः ४०–४१ पाठभेदः—नित्यं (तथा स्थले), व्यतीपातेषु, दानं होमं ( श्राद्धं दानं स्थले ), तस्मादण्य° (तस्य स्याद् स्थले)

4–10 देवीपुराण, ७४. १७—१९ बहवः पाठभेदाः

12–13 देवीपुराण, ७४. २१ समाधिकं (ऽधिकं भवेत् स्थले)

स्वर्धुनी [1]गङ्गा। अत्र च राहुदर्शननिमित्तकं स्नानं रात्रावपि [2]नद्यादिकं प्रविश्य कर्त्तव्यम्। कूपोदकस्नानपक्षे ग्रहणकाल एव [3]जलोद्धारणमित्युक्तमस्माभिराह्निके।

[4]अथ विष्णुः

5 दृश्यते सहितौ यस्यां दिवि चन्द्रबृहस्पती।
पौर्णमासी तु महती ज्ञेया संवत्सरे तु सा।
तस्यां दानोपावासाद्यमक्षयं परिकीर्त्तितम्॥

सहितौ माससंज्ञानिमित्तनक्षत्रगतौ, महाकार्त्तिकादौ तथा दर्शनात्। [5]स्मरन्ति च

10 माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः।
गुरुणा याति संयोगं सा तिथिर्महती मता॥

इति सम्पूर्णमण्डलत्वबलात् पौर्णमासीलाभः।

[6]मत्स्यपुराणे

अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिके तथा।
15 तृतीया चैत्रमासस्य तथा भाद्रपदस्य च॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी॥
श्रावणस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा।

---

१ ख मन्दाकिनी गङ्गा वा
२ क नद्यादि प्रविश्य
३ ख जलोद्धरणम्
४ क अत्र
५ क पठन्ति
६ ङ मात्स्ये

---

5–7 विष्णुसंहिता, ४९. ९-१०क पाठभेदः—प्रोक्ता (ज्ञेया स्थले)
14–2 (पृः २०९) मत्स्यपुराण, १७. ६–८ पाठभेदः—फाल्गुनस्य हि,

कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी [1]सिता ।
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥

अमावास्यामष्टमीं च विहाय [2]सर्वाः शुक्लाः । [3]अत्र कामधेनौ द्वितीया चैत्रमासस्येति लिखितम्, कल्पतरौ तृतीयेति लिखितम् । तदत्र पाठद्वैधे [4]ज्योतिःशास्त्रे मधौ तृतीयेति पाठाच्चैत्रतृतीयैव ग्राह्या । 5

ब्रह्मपुराणे

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे [5]कृष्णत्रयोदश्यां तु द्वापरम् ।
माघस्य पौर्णमास्यां तु घोरं कलियुगं [6]स्मृतम् ॥ 10
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः ।
सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ॥
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु ।
ज्ञेयश्च वृषसंक्रान्त्या द्वापरस्य च संज्ञया ॥
तथा कुम्भस्य संक्रान्त्यामन्तः [7]कलियुगस्य तु ।
युगाद्येषु युगान्तेषु श्राद्धमक्षयमश्नुते ॥ 15

भाद्रकृष्णत्रयोदशी प्रोष्ठपद्यन[8]न्तराशुक्लादिमासरीत्या बोद्धव्या, विष्णवादिभिः [9]तस्या एव श्राद्धकालत्वेनाभिधानात् लोकपरिग्रहाच्च । [10]नभस्य

---

१ क ग तथा
२ ग सर्वाश्च शुक्लाः
३ क अत्र च
४ ग ज्योतिःशास्त्रात् माघतृतीयेति चैत्र°
५ क कृष्णे, ख कृष्णा
६ क तथा
७ क ग कलियुगस्य च
८ ङ अनन्तरं
९ क ख ग तस्या एव नास्ति
१० क लोकपरिग्रहाच्च इति पदानन्तरं भाद्रपौर्णमास्या युगादित्वेनाभिधानात् अधिकः पाठः, ख माघपौर्णमास्या युगादित्वेनाभिधानात् ।

---

ज्यैष्ठपञ्चदशी, दत्तस्याक्षय्य

9–11 रघुनन्दन, तिथितत्त्व, पृ: १८७ पाठभेद:–माधवे, वै ( तु स्थले ),

[1]मासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे इति विष्णुपुराणीयपञ्चदशीपदं पौर्णमासीपरम्। किं च माघाद्यवच्छेदे न पञ्चदशी पौर्णमास्येवेति [2]प्रागुक्तम्, [3]न च तमिस्रपक्षानुषङ्गः प्रमाणाभावात्, विरोधाच्च। एवं च 'दर्शे तु माघमासस्य-प्रवृत्तं द्वापरं युगमिति' गौडस्मृतिः हेयैव। हरिहरस्तु पौर्णमास्यामावास्याया-[4]
5 र्युगादित्वे विकल्पमुक्तवान्। केचिच्च राजाद्यलिखितवाक्यबलात् युगाद्येषु-युगान्तेषु संक्रान्तिषु[5] च [6]पिण्डदानं मन्यन्ते।

विष्णुपुराणे

चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥
10 [7]तैलस्त्रीमांससम्भोगी पर्वस्वेतेषु [8]यः पुमान्।
विन्मूत्रभोजनं नाम प्रयाति नरकं नृप॥
अशेषपर्वस्वेतेषु तस्मात् संयमिभिर्नरैः।
भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैः सदा॥

पेठीनसिः

15 [9]न पर्वसु तलं न क्षुरं [10]न मैथुनं मांसमित्युपेयात्, नामावस्यायां हरितानि छिन्द्यात्।

---

१ ग मासस्य नास्ति
२ ख ग च प्राक् नास्ति
३ क न नास्ति
४ ङ °मावास्यययोर्युगादित्वे
५ क ख च नास्ति
६ क पिण्डं न मन्यन्ते (पिण्डदानं मन्यन्ते स्थले)
७ ग स्त्रीतैल°
८ क वर्जयेत् (यः पुमान् स्थले)
९ ख ङ पर्वसु (न पर्वसु स्थले)
१० क मैथुनं (न मैथुनं स्थले)

---

8–11 रघुनन्दन, तिथितत्त्व, पृ० १४० पाठभेदः—अमावस्याथ, स्त्रीतैल°, वै (यः स्थले), मृतः (नृप स्थले)

उपेयादुपभुञ्जीत ।[1]केचित्तु अनाकरवाक्यात् अमावास्यायां पुनर्भोजनं सायंसन्ध्ययोर्निवृत्तिमाहुः ।

[2]बौधायनः

पर्वसु नाधीयीत ।

यमः 5

आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्दशी ।
मांसाशने पञ्चदशी कामधर्मे तथाष्टमी ।।

वृद्धशातातपः

दन्तकाष्ठममावास्यां मैथुनं च चतुर्दशी ।
हन्ति सप्तकुलं तस्य तैलग्रहणमष्टमी ॥ 10
षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्दशो ।
अत्र सन्निहितं पापं तैले मांसे क्षुरे भगे ।।
षष्ठ्यां तैलमनायुष्यमष्टम्यां पिशितं तथा ।
क्षुरकर्मचतुर्दश्यां तथा पर्वणि मैथुनम् ॥

[3]पर्वणि पञ्चदश्याम् । [4]वराहपुराणे चाण्डालशपथेषु— 15

[5]षष्ठ्यष्टमी त्वमावास्या उभे पक्षे चतुर्दशी ।
अस्नातानां गतिं यास्ये यद्यहं नागमे पुनः ॥

---

१ ख ङ केचित् (केचित्तु स्थले)
२ ख ङ बौधायनः नास्ति
३ ग पर्वणि नास्ति
४ ङ वाराहपुराणे
५ क षष्ठ्यष्टम्याममावास्या

---

16–17 रघुनन्दन, तिथितत्त्व, पृ० १६२ पाठभेद :—षष्ठ्यष्टम्यप्यमावास्या

[1]भविष्यपुराणे

सप्तम्यां स्पृशतस्तैलमिष्टा भार्या विनश्यति।

[2]वामनपुराणे

नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम् ।
5 पूर्णासु योषित् परिवर्जनीया भद्रासु सर्वाणि समाचरेत ॥

प्रतिपदमारभ्य नन्दा भद्रा जया रिक्ता पूर्णा च तिथयः क्रमात् । एवं षष्ठ्यादि एकादश्यादि [3]बोद्धव्यम् ।

नाभ्यङ्गमर्के न च भूमिपुत्रे क्षौरं च शुक्रेऽथ कुजे च मांसम् ।
बुधे च योषित् परिवर्जनीया शेषेषु सर्वाणि सदैव कुर्यात् ॥
10 चित्रासु हस्ते श्रवणे च तैलं क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदासु मांसं योषिन् मघाकृत्तिकयोत्तरासु ॥

[4]वराहपुराणे वैष्णवं प्रति

अष्टम्यां च चतुर्दश्यां षष्ठ्यां च [5]द्वादश्यां तथा ।
अमावास्यां [6]चतुर्थ्यां च मैथुनं योऽधिगच्छति ।
15 तिर्यग्योनिं स गच्छेत मम लोकं न गच्छति ॥

---

१ ख ङ भविष्ये
२ ङ वामने
३ ङ ज्ञेयम्
४ ङ वाराहे
५ क द्वादशीषु वा
६ क ख चतुर्थीं च

---

4–5 रघुनन्दन, तिथितत्त्व, पृ० २७ पाठभेदः–उपाचरेच्च, समाचरेच्च वामनपुराण, १४. ४८ पाठभेदः-परिवर्जयेत

8–9 रघुनन्दन, तिथितत्त्व, पृ० २८ पाठभेदः—योषां न समाचरेच्च

8–11 वामनपुराण, १४. ४९–५१ पाठभेदः—शुक्रे रविजे च मांसम्, योषिन्न समाचरेत् विशाखास्वभिजित्सु

अथ देवीपुराणे

विगताधिर्भवेत् षष्ठ्यामिष्ट्वा स्कन्दमवेक्ष्य च ।

तथा

दैवयोगाद् यदा षष्ठी पुष्यार्करविवासरे ।
स्कन्दयागस्तदा कार्यः सर्वकामप्रसाधकः ॥ 5
यदा [१]वा सूर्यवारेण सप्तमी विजया तु सा ।
तदा भगवतो भानोर्योगः सर्वगुणावहः ॥

तथा

पुनर्वसौ गुरोर्वारे [२]द्वादश्यां श्रवणे [३]तथा ।
मृगशीर्षे तदा योगो विष्णोः सर्वार्थसाधकः ॥ 10

तथा

स्वातौ शनि[४]चतुर्थी च उमायोगे वरा स्मृता ।

[५]अत्र तिथिवारनक्षत्राणां [६]समुच्चयः ।

विष्णुः

[७]योगे नानानक्षत्रविकल्पः । 15

योगपदेन पूजानिर्देशः, ज्योतिष्टोमादिवदा[८]दरातिशयार्थः ।

१ ग वा नास्ति
२ ख ग द्वादशी
३ ग ङ तदा
४ क °चतुर्थी तु
५ ग अत्र नास्ति
६ समुच्चयार्थः (समुच्चयः स्थले)
७ क यागे
८ ख ङ इति (आदर स्थले)

4–7 देवीपुराण, ४५. ४–५ बहवः पाठभेदाः
9–10 देवीपुराण, ४५. ८ बहवः पाठभेदाः
12 देवीपुराण, ४५. १०ख पाठभेदः–स्वाती

तथा

पूर्णिमासु च सर्वासु अष्टमीद्वादशीषु च।
चतुर्दशीतृतीयायां ग्रहक्षषु शुभेषु च।
सर्वेषां च भवेद् [1]योगो भक्तिपूर्वो महाफलः॥

5 तथा

श्रीमेधाज्ञानसा[2]फल्यमुमायोगात् महामते।
योगं ज्ञानं यशः कीर्त्ति महादेवादवाप्नुयात्॥
[3]आरोग्यं [4]च प्रतापत्वं भास्करात् प्राप्यते ध्रुवम्।
गतिमिष्टां यथाकामं प्रददाति त्रिविक्रमः।
10 विघ्नो न जायते तस्य यजेद् यस्तु विनायकम्॥

अपहन्तु तमः सकलं सम्यक् कर्मप्रचारमुपनयतु।
समयप्रदीप एष स्थितिमेतु सभाङ्गने नूनम्॥

इति महामहोपाध्यायश्रीदत्तकृते समयप्रदीपे प्रकीर्णकः परिच्छेद-
स्तृतीय[5]स्समाप्तिमगात्॥

15 [6]समाप्तोऽयं समयप्रदीपाख्यो ग्रन्थः।
शुभमस्तु[7]॥

---

१ ख यागो (योगो स्थले)
२ क वात्सल्यम्
३ ङ आरोग्यं नास्ति
४ क सप्रतापत्वं
५ ख ग समाप्तिमगात् नास्ति
६ क समाप्तो‥ …. °मस्तु नास्ति
७ ख शुभमस्तु इत्यतः परम् संवत् १८१७ लिखितं काश्यां मध्ये मणिकर्णिकासमीपे गङ्गाय (यै) नमः अधिकः पाठः
ग शुभमस्तु इत्यतः परम् संवत १७७९ समयः सावन प्रथम सुदी १० अधिकः पाठः
ङ शुभमस्तु इत्यतः परम् श्रीकाशीविश्वेश्वराय नमः। श्रीसंकराभ्यां (शंकटाभ्यां) नमः कृष्णाय, सं १८४९ अधिकः पाठः

---

2–4 देवीपुराण, ४५. १३ बहवः पाठभेदाः
6–10 देवीपुराण, ४५. १४ ख—१६ बह्वः पाठभेदाः

## APPENDIX-A

Names of authors or works referred to in the समयप्रदीप

आगम—१६७ (13, 16, 17), १६६ (4)

आदित्यपुराण—१५३ (6)

कर्मप्रदीप—१६२ (3), २०७ (15)

कल्पतरु—७२ (7), ६६ (13), १५६ (13), २०५ (9, 16), २०६ (4)

कामधेनु—२०६ (3)

कालिकापुराण—१६६ (11)

गौतम—६७ (9), ७३ (6)

छागलेय—६२ (4),

जावालि—७० (2), १५० (1), २०४ (3),

देवल—५६ (13), ६२ (7), ६६ (10), ७४ (3), ८६ (5), २०३ (11)

देवीपुराण—११३ (16), ११७ (10), ११८ (6), १३२ (1), १४५ (1, 9), १४६ (17), १५० (11), १६१ (6), १७० (14), १७३ (13), १७८ (9), १८४ (10), १६४ (4, 10), २०१ (16), २०२ (16), २०७ (3), २१३ (1)

## APPENDIX — B

### Bibliography

Ācārādarśa of Śrīdatta Upādhyāya—Published by Sūrya Prabhākara Press, Benaras, Saṃvat, 1939.

Agni-purāṇa—Edited by Rajendralal Mitra, Bibliotheca Indica, Calcutta, 1878.

Āhnika-tattva of Raghunandana—Edited by Śyāmākānta Vidyābhūṣaṇa, New edition, Calcutta, 1344 B.S.

Ancient Indian Historical Tradition—F. E. Pargiter, London, 1922.

Āpastamba-dharma-sūtra (with the commentary of Haradatta Miśra)—Edited by A. Cinnasvāmī Śāstrī, Kashi Sanskrit Series, No. 93, Benares, 1932.

Āpastamba-śrauta-sūtra (with the bhāṣya of Dhūrtasvāmī and vṛttis of Rāmāgnicit and Rudradatta)—Edited by Śrīnivāsarāghavācārya, Oriental Research Institute, Sanskrit Series, Nos. 87, 98, 104, University of Mysore, 1960.

Artha-śāstra of Kauṭilya—Edited by R. Shama Sastry, Mysore, 1924.

Aṣṭāviṃśati-tattva of Raghunandana—Edited by Śyāmākānta Vidyābhūṣaṇa, New edition, Calcutta, 1344 B.S.

Āśvalāyana-gṛhya-sūtra (with the commentary entitled anāvila of Haradattācārya)—Edited by T. Gaṇapati Śāstrī, Trivandrum Sanskrit Series, No. 78, Trivandrum, 1923.

Atharva-veda-saṃhitā—Edited by R. Roth and W. D. Whitney, Berlin, 1924.

Bhāgavata-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1315 B.S.

Bhāradvāja-gṛhya-sūtra—Edited by Henriet J. W. Solomons, Leiden, 1913 A.D.

Bhaviṣya-purāṇa—Published by Kṣemarāja Śrīkṛṣṇadāsa, Veṅkaṭeśvara Press, Bombay, 1928.

Brahmāṇḍa-purāṇa—Edited by Devendranātha Basu and published by the Viśvakoṣa Office, Calcutta, 1302 B.S.

Brahma-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1316 B.S.

Bṛhaspati-smṛti—Reconstructed by K. V. Rangaswami Aiyanger and published in Gaekwad's Oriental Series, No. LXXXV, Baroda Oriental Institute, 1941.

Bṛhat-saṃhitā of Varāhamihira—Edited by Kern, Bibliotheca Indica, Calcutta, 1865.

Cambridge History of India—Vol. III, Turks and Afghans, Wolseley Haig, Cambridge, 1928.

Catalogus Catalogorum—Theodor Aufrecht, Franz Steiner Verlag, Wiesbaden, 1962.

Catalogue of Sanskrit Manuscripts in the I. S. Desai Collection in the University of Bombay—Vol. III, H. D. Velankar, Bombay, 1953.

Catalogue of the Coins of the Indian Museum—Edited by C. J. Rodgers in four parts, Calcutta, 1893-96.

Catalogue of Sanskrit Manuscripts in the Library of His Highness Maharaja of Bikaner—R. L. Mitra, Calcutta, 1933.

Catalogue of Sanskrit Manuscripts in the Library of the Deccan College, Poona—Pt. II, R. G. Bhandarkar, Poona, 1884.

Catalogue of Sanskrit Manuscripts in Sarasvati Bhavan, Benares—Vol. III, Kuveranātha Śukla, Varanasi, 1956.

Catalogus Codicum Manuscriptorum Sanscriticorum Bibliothecae Bodleianae, Theodor Aufrecht, Oxonii, MDCCCLXIV.

Caturvarga-cintāmaṇi of Hemādri—

Vol. II (vrata-khaṇḍa), Pt. I.—Edited by Paṇḍita Bharatacandra Śiromaṇi, Bibliotheca Indica, Calcutta, 1878.

Vol. II (vrata-khaṇḍa), Pt. II.—Edited by Paṇḍita Yajñeśvara Bhaṭṭācārya and Paṇḍita Kāmākhyānātha Tarkaratna, Bibliotheca Indica, Calcutta, 1879.

Chandogāhnika of Śrīdatta Upādhyāya—Manuscript No. G. 2903, Asiatic Society, Calcutta.

Dattaka-mīmāṃsā of Nandapaṇḍita—Edited by Upendranātha Vidyāvinoda, Education Press, Calcutta, 1834.

Descriptive Catalogue of Sanskrit Manuscripts in Mithila—Vol. III, K. P. Jaiswal and A. P. Banerjee Śāstrī, Patna, 1927.

Descriptive Catalogue of the Sanskrit Manuscripts in the Government Collection under the care of the Asiatic Society—Vol. III, H. P. Śāstrī, Calcutta, 1925.

Descriptive Catalogue of Sanskrit manuscripts in the library of the India Office—Pts. I-VIII, Julius Eggeling, London, 1887-1904.

Devala-smṛti—Smṛtisandarbha, Third part, Śrīgurumaṇḍalagranthamālā, Calcutta, 1952.

Devī-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1311 B.S.

Durgotsava-viveka of Śūlapāṇi—Edited by Satīśacandra Siddhāntabhūṣaṇa, Saṃskṛta Sāhitya Pariṣad, Calcutta, 1311 B.S.

Encyclopaedia of Religion and Ethics (in twelve vols.)—Edited by James Hastings, Edinburgh, 1908-1921.

Essays—Analytical, Critical and Philological, Vol. III—H. H. Wilson (Collected and edited by Reinhold Rost), London, 1864.

Ferishta (History of the Rise of the Mahomedan Power In India), Vol. I, translated from the original Persian, John Briggs, London, 1829.

Gautama-dharma-sūtra (with the commentary entitled mitākṣarāvṛtti of Haradatta)—Published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1910.

Gobhila-gṛhya-sūtra (with the editor's own commentary)—Edited by Candrakānta Tarkālaṃkāra, Bibliotheca Indica, Calcutta, 1802.

Gopatha-brāhmaṇa—Edited by Dieuke Gaastra, Leiden, 1919.

Gṛhastha-ratnākara of Caṇḍeśvara Ṭhakkura—Edited by Mm. Kamalakṛṣṇa Smṛtitīrtha, Bibliotheca Indica, Calcutta, 1909.

Hindu Religion, Customs and Manners—P. Thomas, First Indian edition, D. B. Taraporevala Sons & Co., Bombay.

Hindutva—Ramdas Gaud, Śivaprasāda Gupta, Kāśī, 1938.

History of Bengal, Vol. II—Edited by Jadunath Sarkar, University of Dacca, 1948.

History of Dharmaśāstra, Vol. I—P. V. Kane, Bhandarkar Oriental Research Institute, Poona, 1930.

History of Mithilā—Upendra Thakura, Mithila Institute, Darbhanga, 1956.

History of Sanskrit Literature, Vol. I—S. N. Dasgupta and S. K. De, University of Calcutta, 1947.

It-sing—Takakusu, Clarendon Press, Oxford, 1896.

Jews Life in the Middle Ages—Abraham, London, 1896.

Journal of American Oriental Society.

Journal of the Asiatic Society.

Journal of the Bihar and Orissa Research Society.

Journal of the Bombay Branch of the Royal Asiatic Society.

Journal of the Gaṅgānātha Jha Research Institute.

Journal of Oriental Research.

Journal of Royal Asiatic Society.

Journal of the University of Gauhati.

Kāla-nirṇaya of Mādhavācārya—Edited by Candrakānta Tarkālaṃkāra, Bibliotheca Indica, Calcutta, 1803.

Kālikā-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1316 B.S.

Kauṣītaka-gṛhya-sūtra (with the commentary of Bhavatrāta)—Edited by T. R. Cintamani, Madras University Sanskrit Series, No. 15, University of Madras, 1944.

Khādira-gṛhya-sūtra (with the commentary of Rudraskanda)—Edited by A. Mahādeva Śāstrī and L. Śrīnivāsācārya, Government Oriental Library Series, Bibliotheca Sanskrit 41, Mysore, 1913.

Kṛtya-kalpataru of Lakṣmīdhara—Vol. VI, (vrata kāṇḍa)—Edited by K. V. Rangaswami Aiyangar, Gaekwad's Oriental Series, No. 123, Baroda Oriental Research Institute, 1953.

Kṛtya-ratnākara of Caṇḍeśvara Ṭhakkura—Edited by Paṇḍita Kamalakṛṣṇa Smṛtitīrtha, Bibliotheca Indica, Calcutta, 1925.

Kūrma-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Second edition, Calcutta, 1332 B.S.

Laṅkāvatāra-sūtra—Edited by Bunyiu Nanjio, Bibliotheca Otaniensis, Vol. I, Kyoto, 1923.

Liṅga-purāṇa—Edited by Jīvānanda Vidyāsāgara, Calcutta, 1885.

Mahābhārata—Critically edited, printed and published in several volumes by the Bhandarkar Oriental Research Institute, Poona.

Mānava-śrauta-sūtra—Edited and translated by Jeannetts M. Van Gelder, International Academy of Indian Culture, New Delhi, 1961-1963.

Manu-smṛti (with the commentaries of Medhātithi and Kullukabhaṭṭa)—Published by Satīśacandra Mukherjee, Vasumatī Sāhitya Mandira, Fourth edition, Calcutta, 1336 B.S.

Mārkaṇḍeya-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Fourth edition, Calcutta, 1316 B.S.

Matsya-purāṇa—Edited by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1907.

Mīmāṃsā-sūtra (with the bhāṣya of Śabarasvāmin)—Edited by Maheśacandra Nyāyaratna, Bibliotheca Indica, Calcutta, 1925.

Narasiṃha-purāṇa—Edited by Uddhavācārya and published by Gopal Narayan & Co., Second edition, Bombay, 1911.

Nirṇaya-sindhu of Kamalākarabhaṭṭa—Edited by Vāsudeva Śarman and published by the Nirṇaya-sāgara Press, Third edition, Bombay, Śaka 1848.

Notices of Sanskrit manuscripts—Second series, Vol. I—Published under the Orders of the Government of Bengal, H. P. Śāstrī, Calcutta, 1900.

Notices of Sanskrit manuscripts—Published under the Orders of the Government of Bengal, R. L. Mitra.
Vol. I, Calcutta, 1900.
Vol. II, Calcutta, 1904.
Vol. IV, Calcutta, 1907.

Padma-purāṇa—Published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1893-1894.

Padma-purāṇa—A Study—Asoke Chatterjee Śāstrī, Published under the auspices of the Government of West Bengal, Sanskrit College, Calcutta, 1967.

Parāśara-smṛti (with the commentary of Mādhavācārya)—Edited by Vāmana Śāstrī Islampurkar, Bombay Sanskrit Series, Bombay, 1893-1911.

Pāraskara-gṛhya-sūtra (with the commentaries of Harihara, Gadādhara and Jayarāma)—Kāśī Sanskrit Series, no. 17, Benares, 1926.

Pitṛbhakti of Śrīdatta Upādhyāya—Edited by Asoke Chatterjee Śāstrī and published in the Chowkhamba Sanskrit Series, Varanasi, 1971.

Pitṛbhaktitaraṅgiṇī of Vācaspati Miśra—Manuscript no. G. 4455 of the Asiatic Society, Calcutta.

Political History of Ancient India—H. C. Raychaudhuri, Fifth edition, University of Calcutta, 1950.

Prāṇatoṣaṇī-tantra of Kṛṣṇānanda Āgamavāgīśa—Published by Satīśacandra Mukherjee, Vasumatī Sāhitya Mandira, Calcutta, 1335 B.S.

Prāyaścitta-viveka of Śūlapāṇi—Edited by Jīvānanda Vidyāsāgara, Calcutta, 1893.

Rāmāyaṇa of Vālmikī (with the commentary entitled Rāmāyaṇa-bhūṣaṇa of Govindarāja)—Edited by T. R. Kṛṣṇācārya and T. R. Vyāsācārya, Bombay, 1911.

Rāmāyaṇa of Vālmikī—Edited by Bhagavad Datta and Vishvabandhu Śāstrī and published in several volumes by the Research Department, D. A. V. College, Lahore, 1931-1947.

Ṛg-Veda (with the bhāṣya of Sāyaṇācārya)—Edited by Mm. Rājārāma Śāstrī Bodas and Śivarāma Śāstrī Gore and published by Tookaram Tatya, Bombay, Śaka 1810.

Śāṅkhāyana-śrauta-sūtra—Edited by A. Hillebrandt, Bibliotheca Indica, Calcutta, 1888.

Śatapatha-brāhmaṇa—Edited by A. Weber, Otto Harrassowitz, Leipzig, 1924.

Skanda-purāṇa—Published by Kṣemarāja Śrīkṛṣṇadāsa, Veṅkaṭeśvara Press, Bombay, 1910.

Smṛtitattva of Raghunandana—Edited by Jīvānanda Vidyāsāgara in two volumes, Calcutta, 1895.

Śrāddha-cintāmaṇi of Vācaspati Miśra—Edited by Mahādeva Smṛtitīrtha Bhaṭṭācārya and published by Kāśīcandra Bhaṭṭācārya, Benares, Śaka 1814.

Śrāddha-kalpa of Śrīdatta Upādhyāya—Edited by Asoke Chatterjee Śāstrī and published by the Sanskrit University, Varanasi, 1971.

Śrāddha-viveka of Śūlapāṇi with the commentary of Śrīkṛṣṇa Tarkālaṃkāra —Edited by Caṇḍīcaraṇa Smṛtibhūṣaṇa, Second edition, Calcutta, 1299 B. S.

Taittirīya-āraṇyaka (with the bhāṣya of Sāyaṇācārya—Edited and published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1898.

Taittirīya-saṃhitā (with the bhāṣya of Sāyaṇācārya)—Edited and published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1900.

Tarīkh-i-Firoz Shahi—Vol. III, Elliot (Eng. translation).

Ūnaviṃśati-saṃhitā—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Second edition, Calcutta, 1316 B.S.

Vājasaneyī-saṃhitā (with the commentaries of Uvvaṭa and Mahīdhara)—Edited by Vāsudeva Lakṣmaṇa Śāstrī Paṇaśīkara and published by Pandurang Jawaji, Nirṇaya-sāgara Press, Second edition, Bombay, 1929.

Vāmana-purāṇa—Edited by A. S. Gupta and published by the All India Kashiraja Trust, Fort Ramnagar, Varanasi, 1967.

Varāha-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Calcutta, 1313 B.S.

Vāyu-purāṇa—Edited and published by Hari Nārāyaṇa Apte, Ānandāśrama Sanskrit Series, Poona, 1905.

Vidhāna-pārijāta—Printed in three volumes. Vols. I and II have been edited by Paṇḍita Tārāprasanna Vidyāratna and Vol. III by Paṇḍita Īśvaracandra Śāstrī, Bibliotheca Indica, Calcutta, 1905-1951.

Viṣṇu-dharmottara (citrasūtra)—Edited by Asoke Chatterjee Śāstrī and published by the Sanskrit University, Varanasi, 1971.

Viṣṇu-purāṇa—Edited by Pañcānana Tarkaratna and published by the Vaṅgavāsī Press, Second edition, Calcutta, 1331 B.S.

Viṣṇu-saṃhitā—Edited by T. Gaṇapati Śāstrī, Trivandrum Sanskrit Series, Trivandrum, 1925.

Vrata-kāla-viveka of Śūlapāṇi—Edited by Suresh Chandra Banerji and reprinted from Indian Historical Quarterly, Vol. XVII, No. 4, 1941.

Yājñavalkya-smṛti (with the commentary entitled Mitākṣarā of Vijñāneśvara)—Edited by Vāsudeva Lakṣmaṇa Śāstrī Paṇaśīkara and published by the Nirṇaya-sāgara Press, Second edition, Bombay, 1918.

## CORRIGENDA

| Page | Line | Read | Instead of |
|---|---|---|---|
| १ | ८ | राजनीतिक्यै | राजनीतिकीं |
| ३ | ७ | पुनरुददीधरत् | पुनरुदबीधरत् |
| ५ | १९ | मिथिलावासिनः | मिथिलावासिनो |
| ५ | २७ | प्रभावेण | प्रभावेन |
| २२ | १७ | शुद्ध्युपायाः कात्स्न्यन | शुद्ध्युपाया कार्त्स्नेन |
| २४ | ३ | कुर्यात् | कूर्यात् |
| २५ | ५ | अभ्यस्यन्ति | अभ्यसन्ति |
| २८ | ३ | प्रधानगामीति | प्रधानगामिति |
| ३० | १२ | व्रतानाम् | व्रतानाम |
| ३२ | १८ | सङ्कल्पादीनां | सङ्कल्पादिनां |
| ३३ | ४ | सङ्कल्पस्यानाचरणे | सङ्कल्पस्याचरणे |
| ३५ | २२ | दोषो | दोषा |
| ३९ | २४ | शिवरात्र्यादि° | शिवरात्रादि° |
| ३९ | २९ | निरणैषीत् | निरनैषीत् |
| ४२ | १४ | सर्पस्नपने | सर्पस्वपने |
| ४३ | १ | प्रभृति | प्रभृति आरभ्य |
| ४३ | २५ | व्रतान्यभिधाय | व्रतान्याभिधाय |
| ४६ | ४ | विविधैः | विविध |
| ४६ | ५ | विविध | विविधैः |
| ४७ | १ | मासि | माषि |
| ५२ | १८ | भवनस्य | भवनास्य |
| ५२ | २४ | अपेक्ष्यन्ते | अपेक्षन्ते |
| ६४ | ६ | पालनस्याप्य° | पालनस्याप्या° |
| ८२ | १२ | रात्र्यादावपि | रात्रादावपि |
| ८६ | १५ | सूत्रद्वयात् | सुत्रद्वयात् |
| ८७ | २ | मासो | मासोः |
| ९५ | ५ | विशेषतो | विशेषितो |
| ९६ | १२ | पूष्णः | पुष्णः |

| Page | Line | Read | Instead of |
|---|---|---|---|
| ९८ | १४ | कस्तूरिका | कस्तुरिका |
| १०७ | ३ | संवर्तुः | शंवर्तुः |
| १०७ | १६ | पूजेति | पूजति |
| ११० | १२ | गोमूत्र° | गोमुत्र° |
| ११६ | १ | साङ्ग | स्वाङ्ग |
| १३७ | १० | शोभनम् | शोभनाम् |
| १४० | ५ | स्त्रिदिवम् | त्रिदिवम् |
| १४७ | १६ | भाजनं चेत्यर्थः | भाजनंश्चेत्यर्थः |
| १४८ | ७ | तिलैः | तिलेः |
| १५४ | १२ | सुप्तेषु | सुप्तासु |
| १५५ | ४ | °कुटजेश्चैव बलिकार्जुनकैः | °कुटजश्चैव बलिकोऽर्जुनकैः |
| १५५ | ८ | गृह्णन् | गृह्नन् |
| १५८ | १ | मिथुनगते सूर्ये | मिथुनगते सूय |
| १५९ | १५ | अष्टाविंशतिर्मे | अष्टाविंशति मे |
| १६१ | १६ | अपराह्णिक | अपराह्निक |
| १६३ | ८ | स्याद् | स्थाद् |
| १६७ | ११ | पश्चिमत्वम् | पश्चिमत्तम् |
| १६७ | १४, १७ | सूर्ये | सुर्ये |
| १६९ | १३ | कूष्माण्डैः | कुष्माण्डैः |
| १७८ | २ | घृतपूर्णभाजनम् | घृतपूण भाजनम् |
| १८६ | ९ | पाद्मे | पाद्म |
| १९१ | १५ | अदित्यां | आदित्यां |
| १९३ | १ | मन्त्रेणार्घं | मन्त्रेणाघ |
| १९३ | १४ | मन्त्रेण | मण्त्रेण |
| २०२ | १३ | पश्चाच्च | पश्वाच्च |
| २०७ | ४ | सैंहिकेयेन | सहिकेयेन |
| २०७ | १२ | ऊषर·······समुदाहृतम् | उषर ··· ··समुदाहृतम् |
| २०८ | ५ | दृश्येते | दृश्यते |
| २०८ | ७ | दानोपवासाद्यम् | दानोपावासाद्यम् |